प्राप्तिस्थान–

शाह शांतिलाल हरगोवनदास ठे देवीशाहनो पाडो अमदावाद

२ मफतलाल झवेरचंद नागजी भूदरनी पोळ अमदावाद

१ थी ३६ पृष्ठ वीर वीजय प्रेसमा पांजरापोळ,
मणीलाल छगनलाले छाप्युं
त्यारपछीनुं संपूर्ण शारदा मुद्रणालय जैन सोसायटीना मालीक
पं. भगवानदास हरखचंदे छाप्युं
टाइटल पेज श्री क्रीश्ना प्रिन्टरी, रतनपोळ–अमदावाद.

॥१॥

# बे बोल

प्रश्नव्याकरणसूत्र ए कुटग्रंथ लेखाय छे आना उपर अभयदेवसूरि महाराजनी टीका प्रथम छपाई छे—आ ग्रंथ उपर नहि छपायेली पू. ज्ञानविमलसूरिनी बीजी टीका अमारी ग्रंथमाळा तरफथी छपाववामां आवी छे. आ टीका एटली बधी सरळ अने हृदयंगम छे के गमे तेवा नवीन अभ्यासीनो पण तेमां स्हेजे प्रवेश थइ शके छे. आ ग्रंथमां आवता एकेक विषयने एटली सरसरीते छण्यो छे के दरेक वांचकने ते संबंधी संतोष थाय. प्रस्तुत ग्रंथकारनुं जीवन ग्रंथनुं अवलोकन विगेरे संबंधीनुं विस्तृत वर्णन आना बीजा भागमां अमे आपवाना होई अत्यारे ते संबंधी कांई उल्लेख करता नथी, आ ग्रंथना शरुआतना फर्मा सिवाय बाकीना फर्मा निर्णयसागरी टाइपमां छपाववामां आव्या छे, अने हवे पछीनो बीजो भाग पण निर्णयसागरी टाइपमां छपाववानो शरु करी दीधेल छे आना संशोधन माटे त्रण प्रतिनो उपयोग करवामां आव्यो छे १ देवीशाना पाडाना विमळना उपाश्रयनी प्रत २ डहेलाना उपाश्रयनी प्रत ३ जैनानंद पुस्तकालयनी प्रत, छतां आ त्रणे प्रतोमांथी एके प्रत पूर्वे नहिं संशोधायेली होवाथी आने शुद्ध करवामां वधुज प्रयत्न करवामां आव्यो होवा छतां कांइ पण स्खलना रही होय तो तेने वांचको सुधारी लेशे

एज—

व्याख्यानवाचस्पति विद्वद्वर्य परमपूज्य श्रीमत्पंन्यास
रंगविमलगणिवर विनेयाणु कनकविमलजी

प्रह्लादनपुर
आषाड शुक्ल पूर्णिमा
विक्रम संवत १९९३

## आ ग्रंथना प्रकाशनमां आर्थिक सहाय करनार सद्‌ग्रहस्थोनी यादगीर नामावली

१०१ शाह सकरचंद केवळदास अमदावाद
१०१ शाह डाह्याभाइ कीशोरदासनी विधवा बाइ आधार तरफथी अमदावाद
५० पटवा डाह्याभाइ सांकळचंदनी विधवा बेन जासुदबेन तरफथी अमदावाद
५१ शेरदलाल केशवलाल दलसुखभाइ विघरोल
५१ शाह कमाभाइ बकोरभाइ विजापुर
४० सुतारवाडानी बाइओना उपाश्रय तरफथी विजापुर
१०१ शाह डाह्याभाइ वीरचंद तरफथी तेमना पुत्र पोपटलालना स्मरणार्थे लाडोल
५१ शाह उत्तमचंद दळीचंद तरफथी तेमनां धर्मपत्नी बाइ शान्ताना स्मरणार्थे

३१ दोशी लालचंद खुशालदास ब्राह्मणवा
४१ दोशी नगीनभाइ डाह्याभाइ ब्राह्मणवा
तथा मणीलाल घेलाभाइ ब्राह्मणवा
११ काळीदास छगनलाल ब्राह्मणवा
११ संघवी गोकळदास खुबचंद ब्राह्मणवा
२५ चीमनलाल अनोपचंद लोद्रा
२५ श्री लोद्राना श्री संघ तरफथी ज्ञानखातामांथी
१५ शेठ पुनमचंद रतनचंद पेथापुर
१६ शेठ माणेकलाल मलुकचंद पेथापुर
१०१ श्री विमलगच्छना उपाश्रयना ज्ञानखातामांथी पेथापुर

परमपूज्य–शांतमूर्ति श्रीमद् पन्यास दयाविमलगणिवरपादपद्मेभ्यो नमः

। श्रीगोडीपार्श्वनाथाय नमः । श्रीप्रवचनेभ्यो नमः ।

## तपागच्छाधिपति सूरिपुरन्दरश्रीमद् ज्ञानविमलसूरिविरचितवृत्त्युपेतम्

# ॥ प्रश्नव्याकरणम् ॥

उँ नमः सिद्धम्

ऐन्द्रवृन्दनतक्रमोऽमितगुण–प्राज्यर्द्धिसिद्धिप्रदः । श्रीपार्श्वः परमेश्वरो विजयते, विश्वत्रयीनायकः ॥
यत्तौल्यं न बिभर्त्ति कल्पफलदो, यच्छन्नपीष्टं जने । यन्नामाऽपि पिपर्त्ति सौख्यमतुलं, चात्यन्तिकं [1]चाऽक्षयम् ॥१॥
श्री वामेयजिनो ददात्वभिमतं, संसारसंज्ञे मरौ । यन्मूर्त्तिः सुरभूरुहां सदृशतामालम्बते साम्प्रतम् ।
यन्मौलौ फणिनः फणा दलततिर्जाता तदग्रस्थितो । रत्नौघः कुसुमायते स भगवान् भूयात्सदा श्रेयसे ॥२॥

---

१ चाऽव्ययम्

जीयात्सदा श्रीजिनवर्द्धमानः, सिद्धार्थभूपाऽन्वयवर्द्धमानः।
मन्ये जगद्विघ्नमृगान् निहन्तुं, दधार योऽङ्कच्छलतो मृगेन्द्रम् ॥३॥
जयति जगद्दीपनिभं, जैनं तेजश्च वर्द्धमानकान्तिभरम्। नैच्छत् स्नेहदशादि, पात्रं नाऽधः करोति कदा ॥४॥
जीयात्सा जैनागीर्यदुदितलवमाप्य वस्तुविस्तारं। कलयन्ति ललितहृदया, भवन्ति भव्यत्वतत्त्वभृतः ॥५॥
यैर्मादृशेऽपि कठिनोपलतुल्यचित्ते, सिक्तं तथा निजकृपारसतो यदेतत्।
जातं तथा नवनवाङ्कुरितं सुबोधैस्ते ज्ञानदातृगुरवोऽत्र सदा जयन्तु ॥६॥

रम्या नवांगवृत्तीः, श्रीमदभयदेवसूरिणा रचिताः। ताः सद्भिर्वाच्यमानाः, सुदृशां तत्त्वप्रबोधकराः ॥७॥
सम्प्रति भानुद्युतय इवाऽऽसतेऽनल्पजल्पगम्भीराः। परमवनिवेश्मसंगतपदार्थमाभाति दीपिकया ॥८॥ युग्मं ॥
मत्तो मन्दमतीनां, स्वीयाऽन्येषां परोपकाराय। विवरणमेतत्सुगमं, शब्दार्थे भवतु भव्यानाम् ॥९॥
सद्भिरहं नो हास्यः, किमकारि विचेष्टितं शिशोरुचितं। आघ्रातोऽपि हि वदने, दत्ते ताम्बूलमिव किं नो ॥१०॥
तस्मान्मदीययत्नः, फलेग्रहिः स्यात् सतामनुग्रहतः। प्रश्नव्याकरणाङ्गस्य वृत्तेः [त्तौ] सुखबोधिका विषयः ॥११॥

तथा इह जगति सकलोऽपि लोकः सुखाभिलाषी दुःखपराङ्मुखश्च, सुखं च पारमार्थिकं त्रैकालिकदुःखाऽत्यन्ताभावस्तच्च सकलकर्मक्षयलक्षणमोक्षप्रभवं, न पुनरिन्द्रियादिप्रभवं सांसारिकमपि, तस्य स्रक्चन्दनाऽङ्गनादिरूपोपाधिकलितत्वेन दुःखानुषङ्गित्वात् कदाशामात्रविषयत्वेन मरुमरीचिकाजलतरङ्गकल्पत्वेन क्षणं दृष्टनष्टत्वेनाऽसारत्वाच्च तेन सुखार्थिना मोक्षार्थे यतितव्यं, मोक्षार्थोऽपि

धर्मफलत्वेन प्रधानपुरुषार्थत्वात् स तु ज्ञानाद्यासेवनयैव सिद्ध्यति ज्ञानादीनामेव तत्कारणत्वेन मोक्षमार्गत्वात् । यदुक्तं

**नाणं च दंसणं चेव, चरित्तं च तवो तहा । एस मग्गोत्ति पन्नत्तो, जिणेहिं वरदंसीहिं ॥१॥**

ज्ञानादिशून्यस्य तु मोक्षस्यैवाऽसंभवात् कुतस्तज्जन्यसुखप्राप्तिः, न च कोऽपि मार्गमप्रतिपन्नो मार्गभ्रष्टो वा समीहितनगराऽवाप्त्या तत्सुखोपभोगी स्यादिति लोकेऽपि, तत्र ज्ञानादिष्वपि साक्षान्मोक्षसाधनं सम्यक् संयमानुष्ठानं तच्च सम्यग्ज्ञानपूर्वकमेव अतः प्रथमतो लोके लोकोत्तरेऽपि ज्ञानमेव प्रयत्नविषयीकार्यः यतः—

**पढमं नाणं तओ दया, एवं चिट्ठइ सव्वसंजए । अन्नाणी किं काही, किं वा नाही छेयपावगं ॥ १ ॥**

तस्मात् सम्यग्ज्ञानाभावे च [1]हेयोपादेयपदार्थज्ञानपरिरहितः केवलं प्राणातिपाताद्याश्रवेष्वेवाऽश्रान्तप्रवृत्तिभागेव स्यात् । न पुनः संयमानुष्ठानं श्रयेत् यतोऽनादिप्रवाहापाति अविरतिगर्त्तापतितत्वेन जीवानां स्वतः सिद्धत्वात्, अतः सम्यक् ज्ञानाभावे चारित्रवार्ताऽपि दुरापा, सम्यक्ज्ञानमपि मतिश्रुतावधिमनःपर्यवकेवलज्ञानात्पञ्चधा तेष्वपि श्रुतज्ञानस्यैव प्राधान्यं, संयमे स्वपरोपकृतौ सापेक्षत्वात् यदुक्तं—

**सुयनाणं महिड्ढियं केवलं तयणंतरं । अप्पणो सेसगाणं च, जम्हा तं पविभासगं ॥१॥**

तदपि द्रव्यभावभेदेन द्विधा द्रव्यश्रुतं भावश्रुतं चेत्यादि, भूयान् विचारस्तु नंदिवृत्त्यादिभ्योऽवसेयः । अत्र तु श्रुतज्ञानस्यैव

---

१ हेया वंधासवपुन्नपावा जीवाजीवा य हुंति विन्नेया । संवरनिज्जरमुक्खो तिन्नि वि एओ उवावेया ॥ १ ॥
जीवो संवर निज्झरमुक्खो चत्तारि हुंति अरूवा । रूइ वंधासव पुन्नपावा मीसो हुंति अजीवो य ॥ २ ॥

भावमङ्गलरूपत्वात् धुरिप्रकाशार्हं, तत्र तस्योपादानभूतं द्रव्यश्रुतं तदपि मंगलरूपं तदपि द्विविधं सूत्रार्थोभयरूपं, तत्र द्वादशाङ्ग्या अर्थभाषकोऽर्हन्नेव, तथाविधाऽर्हद्वचनेन गणधराणां तथाविधकर्मक्षयोपशमस्य प्रादुर्भावात्, सूत्ररचना तु अभिलाप्यानामर्थानां वाचक-शब्दसन्दर्भरूपा गणधरायत्तैव यतः—" अत्थं भासइ अरहा सुत्तं गुंथंति गणहरा निउणमिति " परं क्षायोपशमवैचित्र्यात् गद्यपद्यरचनाऽपि प्रतिगणधरं भिन्नैव, न चैवमर्थभाषणेऽपि प्रति तीर्थंकरभिन्नता शङ्कनीया। सर्वेषामपि तीर्थकृतामर्थप्ररूपणे भेदाऽभावात् तन्निदानस्य केवलज्ञानस्य क्षायिकत्वेन सह वैचित्र्याऽभावात्। अतः श्रुतज्ञानस्यैव मङ्गलरूपता उक्ता॥

तत्र प्रेक्षावतां प्रवृत्त्यर्थं शास्त्रस्यादौ मङ्गलादिचतुष्टयमन्वेष्टव्यम्। तत्र त्रिधा मङ्गलं कायिकं वाचिकं मानसिकं च, तत्र कायिकेन शास्त्रस्याऽऽदेयतया प्रवृत्तिर्भवति। वाचिकं शिष्यशिष्यार्थं। मानसिकं निर्विघ्नतया ग्रंथसमाप्त्यर्थं निःश्रेयसाऽवाप्त्यर्थं च। तथा चाशीर्वादात्मकं वस्तुनिर्देशात्मकं नमस्कारात्मकं वा, अत्र तु श्रेयोभूतशास्त्रस्यैव मङ्गलात्मकत्वं इत्येवं मङ्गलं शिष्याणां मङ्गलबुद्धिपरिग्रहाय आदौ मध्येऽवसाने चाऽवसातव्यं। यत आदिमंगलपरिगृहीतानि शास्त्राणि निर्विघ्नतया पारगामीनि भवन्ति। मध्यमङ्गलपरिगृहीतानि शिष्यबुद्धावारोपितानि स्थिरपरिचितानि भवन्ति। अन्त्यमङ्गलपरिगृहीतानि पुनः शिष्यप्रशिष्यादि परंपरानुगामीनि स्युः। तत्र [प्रा] प्रकृतशास्त्रे आदिमङ्गलं 'नमो अरिहंताणमिति' पदेन 'जंबू इ णमोत्ति' भगवदामन्त्रणेन दर्शितमेव। मध्यमंगलं प्रथमसंवरद्वारे अहिंसा भगवती वर्णने दर्शितम्। अन्त्यमंगलं तु "नायपुत्तेण वीरेण भगवया पयासियं" इत्यालापकेनेति बोध्यं, इत्यलं विस्तरेण विस्तारार्थिना चाऽन्ये ग्रन्था विलोक्या इति शास्त्र प्रस्तावना। तत्र मङ्गलं तु दर्शितम्॥१॥

सम्बन्धस्तु वाच्यवाचकभावः कार्यकारणभावलक्षणः गुरुपर्वक्रमलक्षणो वा ॥२॥ प्रयोजनं तु द्वेधा परं अपरं च, तदपि

कर्तृश्रोतृस्वामिप्रकारत्वेन प्रत्येकं द्विधा, अनन्तरं परंपरं कर्तुः श्रोतुश्च, तत्र कर्तुरनन्तरप्रयोजनं सत्त्वानुग्रहबुद्ध्या शास्त्रं कुर्वतो महती निर्जरा तीर्थकृन्नामप्रभृतिपुण्यप्रकृतेर्बन्धश्च, यदुक्तं—

**न भवति धर्मश्रोतुः सर्वस्यैकान्ततो हितश्रवणात् । ब्रुवतोऽनुग्रहबुद्ध्या वक्तुस्त्वेकान्ततो भवति ॥१॥** इति

परंपरं तु मोक्ष एव । श्रोतुश्चापरं प्रयोजनं यथावस्थितपदार्थावगमपूर्वकं सदुपदेशानुष्ठानप्रवृत्त्यादि उभयोरपि परं प्रयोजनं मोक्ष एव, ततः परप्रयोजनाऽभावात् ॥३॥

अभिधेयं तु अस्य शास्त्रस्यैव प्रश्नव्याकरणेति नाम इति मङ्गलादिचतुष्टयमुक्त्वा अथ शास्त्रस्याऽभिधेयार्थमाह—

**श्री पार्श्वनाथाय नमः नमो अरिहंताणं । जंबू–इ णमो । अण्हयसंवरविणिच्छियं पवयणस्स निस्संदं । वोच्छामि णिच्छयत्थं सुहासियत्थं महेसीहिं ॥ १ ॥**

अथ प्रश्नव्याकरणाख्यं दशमाङ्गं व्याख्यायते[2]। प्रश्नाः–अङ्गुष्ठादिप्रश्नविद्यास्ता व्याक्रियन्ते–अभिधीयन्ते अस्मिन्निति प्रश्नव्याकरणं, कर्तर्यनटि सिद्धं । क्वचित् प्रश्नव्याकरणदशा इति नाम दृश्यते, तत्र प्रश्नानां–विद्याविशेषाणां यानि व्याकरणानि तेषां प्रतिपादनपरा दशाऽध्ययनप्रतिबद्धा ग्रंथपद्धतयः इति एतादृशं अंगं पूर्वकालेऽभूत् । इदानीं तु आश्रवसंवरपञ्चकव्याकृतिरेव लभ्यते । पूर्वाचार्यैरेदंयुगीनपुरुषाणां तथाविधहीनहीनतरपाण्डित्यबलबुद्धिवीर्याऽपेक्षया पुष्टालम्बनमुद्दिश्य प्रश्नादिविद्यास्थाने पञ्चाश्रवसंवररूपं समुत्तारितं, विशिष्टसंयमवतां क्षयोपशमवशात् प्रश्नादिविद्यासंभवात् । ततः संयमवानेव तद्वान् अतस्तत्स्वरूप-

१ प्रकृतिबं०    २ अथ कोऽस्याऽभिधानस्याऽर्थः

मवतारितवान् श्रीमद्वीरस्वामिशिष्यपञ्चमगणधरः श्रीसुधर्म्मस्वामिनामा स्वशिष्यश्रीजम्बूस्वामिनमुद्दिश्येति । अत्र सम्बन्धाऽभिधेयप्रयोजनप्रतिपादनपरामाद्यगाथामाह—

' जंबू ' इत्यादि पुनः पुस्तकान्तरे उपोद्घातग्रन्थः प्राप्यते यथा

तेणं कालेणं तेणं समएणं चंपा नाम नयरी होत्था, पुण्णभद्दे चेइए, वणसंडे असोगवरपायवे पुढविसिलापट्टए, तत्थ णं चंपाए नयरीए कोणीए नामं राया । धारिणी देवी होत्था । तेणं कालेणं तेणं समएणं समणस्स भगवओ महावीरस्स अंतेवासी अज्जसोहम्मे नामं थेरे जाइसंपन्ने, कुलसंपन्ने, बलसंपन्ने, रूवसंपन्ने, विणयसंपन्ने, नाणसंपन्ने, दंसणसंपन्ने, चरित्तसंपन्ने, लज्जासंपन्ने, लाघवसंपन्ने, ओयंसी, तेयंसी, वच्चंसी, जसंसी, जियकोहे, जियमाणे, जियमाए, जियलोहे, जियनिद्दे जियइंदिए जियपरिसहे जीवियासमरणभयविप्पमुक्के, तवप्पहाणे गुणप्प० करणप्प० चरणप्प० निच्छयप्प० अज्जवप्प० विज्जाप्प० मंतप्प० जोगप्प० अज्जवप्प० मद्दवप्प० लाघवप्प० खंतिप्प० गुत्तिप्प० मुत्तिप्प० बंभप्प० वयप्प० सच्चप्प० सोयप्प० नाणप्प० दंसणप्प० चरित्तप्प० चउद्दसपुव्वी चउनाणोवगए ॥ पंचहिं अणगारसएहिं सद्धिं संपरिवुडे, पुव्वाणुपुव्विं चरमाणे, गामाणुगामं दुइज्जमाणे ॥१०॥ जेणेव चंपानयरी तेणेव उवागच्छइ, उवागच्छइत्ता जाव अहापडिरूवं उग्गहं उग्गिण्हित्ता संजमेण तवसा अप्पाणं भावेमाणे विहरइ । परिसा निग्गया, धम्मो कहिओ, जामेव दिसिं पाउब्भुआ तामेव दिसिं पडिगया । तेणं कालेणं तेणं समएणं अज्जसुहम्मस्स थेरस्स जेट्ठे अंतेवासी अज्जजंबूनामे थेरं अदूरसामंते उड्ढंजाणू अहोसिरे ज्झाणकोट्ठोवगए जाव संजमेणं

१ अत्र सर्वेषां वर्णनं औपपातिकांगोपांगादवसेयं ।

तवसा अप्पाणं भावेमाणे विहरइ। तएणं से अज्जजंबू जायसड्ढे [ जायसंसए जायकोउहल्ले ] ३ उप्पन्नसड्ढे ३ संजायसड्ढे ३ समुप्पन्नसड्ढे ३ जेणेव अज्जसुहम्मे थेरे तेणेव उवागच्छइ, उवागच्छित्ता अज्जसुहम्मं थेरं तिक्खुतो आयाहिणपयाहिणं करेइ, वंदइ नमंसइ। नच्चासण्णे नाइदूरे विणएणं पंजलिउडे पज्जुवासमाणे एवं वयासी। जइ णं भंते समणेणं भगवया महावीरेण जाव संपत्तेण नवमस्स अंगस्स अणुत्तरोवाइयदसाणं अयमट्ठे पन्नत्ते। दसमस्स णं भंते अंगस्स पण्हवागरणाणं समणेणं ३ जावसंपन्नेणं के अट्ठे पण्णत्ते ? जंबू दसमस्स अंगस्स समणेणं ३ जाव संपत्तेणं दो सुयखंधा पण्णत्ता। आसवदारा य संवरदारा य। पढमस्स णं भंते सुयखंधस्स समणेणं ३ जाव संपत्तेणं कइ अज्झयणा पण्णत्ता ? जंबू पढमस्स णं सुयखंधस्स जाव संपत्तेणं पंच अज्झयणा पण्णत्ता, दोच्चस्स णं भंते ?० एवं चेव, एएसिं णं भंते ! अज्झयणाणं अण्हयसंवराणं समणेणं ३ जाव संपत्तेणं के अट्ठे पण्णत्ते ? तएणं अजसुहम्मे थेरे जंबू नामेणं अणगारेणं एवं वुत्ते समाणे जंबूं अणगारं एवं वयासी। 'जंबू इणमो' इत्यादि अयं च 'तेणं कालेणं तेणं समएणमित्यादिकः पाठः षष्ठांगप्रथमज्ञातादवसेयः। इहाऽमुत्राऽनुक्तोपि ग्रन्थपद्धतिलापनिकार्थं उपोद्घातसूत्रतया लिखितो वृत्तिकारिणा श्रीमदभयदेवसूरिणा, या च इहाऽस्य द्विश्रुतस्कन्धतोक्ता साऽस्येह न व्यक्ता परं आश्रवसंवरयोर्विसंवादिधर्म्मतयोक्ता। अत्र तु एकश्रुतस्कन्धतया एव रूढत्वात 'जे आसवा ते संवरा' इति पद्धतया कथं आश्रवपरिहारे संवरासेवनत्वमेवेत्येकत्वं एक एवेति ज्ञेयं। गाथा व्याख्यानमाह—

'जंबू' नामेत्यामन्त्रणं 'इणमो'त्ति इदं वक्ष्यमाणतया प्रत्यक्षं यत्शास्त्रं किंभूतं 'आश्रवसंवरविणिच्छयं' ति आ-अभिविधिना सर्वव्यापकविधित्वेन श्रौति—श्रवति वा कर्म येभ्यस्ते आश्रवाः प्राणातिपातादयः पंच। तथा संव्रियन्ते निरुध्यन्ते आत्मकासारे कर्म-

सलिलं प्रविशत् यैरिति संवराः प्राणातिपातविरमणरूपादयः पञ्च, ते आश्रवाश्च संवराश्च विशेषेण फलद्वारतया निश्चीयंते-निर्णीयंते स्वरूपाभिधानतो यस्मिन तदाश्रवसंवरविनिश्चितं । पुनः किंभूतं प्रवचनं द्वादशांगं जिनशासनं तस्य निस्यन्द इव निस्यन्दः मृद्वीकाखर्जूरादिसुन्दरफलस्य निस्यन्द इव परमरसस्नुतिरिव अस्य प्रवचनसारत्वात्, तत् सारत्वं चरणरूपं, चरणं च आश्रवसंवरपरिहारासेवनालक्षणानुष्ठानप्रतिपादकत्वात् सारं यदुक्तं-

सामाइयमाइयं सुयनाणं जाव बिन्दुसाराओ । तस्स वि सारो चरणं सारो चरणस्स निव्वाणं ॥१॥

इति वचनात् तत्तादृशं शास्त्रं 'वोच्छामि' वक्ष्ये भणिष्यामि किमर्थं 'निच्छियत्थं'ति-निर्गतः कर्मणां चयो निश्चयो मोक्षस्तदर्थं तत्प्राप्तये । अथवेदं विशेषणं शास्त्रस्यैव निश्चयो मोक्षस्स एव अर्थः प्रयोजनं साक्षान्मुक्तिहेतुः, तेनाऽस्य मोक्षांगत्वं नामस्थापनाद्रव्यभावादीनि । तथाऽत्र तीर्थंकरापेक्षया अर्थतः आत्मागमता, गणधरापेक्षया अनंतरागमता, तच्छिष्यापेक्षया परंपरागमता, जंबू इत्यनेन सुधर्मस्वाम्यपेक्षया आत्मागमता जम्बूस्वाम्यपेक्षया अनंतरागमता तच्छिष्याऽपेक्षया परंपरागमता। अत्र चत्वार्यनुयोगद्वाराणि नाम-स्थापना-द्रव्य-भावादीनि निर्युक्तितोऽवसेयानि । तत्र यथोद्देशं निर्देश इति न्यायात् आश्रवास्तेप्यात्मपरिणामा अशुभसंकल्पास्तान्नामतश्च प्रतिपादयन्नाह—

**श्री पार्श्वनाथाय नमः ॥ नमो अरिहंताणं ॥ जंबू-इ णमो । अण्हयसंवरविणिच्छियं पवयणस्स निस्संदं । वोच्छामि णिच्छयत्थं सुहासियत्थं महेसीहिं ॥ १ ॥**

ग्रंथकर्त्ता श्री सुधर्मास्वामी जंबू प्रति इदं वक्ष्यमाणमाह आश्रवाः-प्राणातिपातादयः, संवराः-प्राणातिपातविरमणादयः, तेषां

निश्चितो निर्णीतोऽर्थो यस्मिन् तत्, आश्रवन्ति—आगच्छन्ति कर्माणि येभ्यस्ते आश्रवाः । संव्रियन्ते पापकर्म इति संवराः प्रवचनद्वादशांगस्य निस्यंदं—सारं वोच्छामि—वक्ष्ये । निश्चितार्थं—मोक्षप्रयोजनभूतं,सुष्ठु शोभनतया भाषितो अर्थो यस्य कैः महर्षिभिः गणधरादिभिः सदा सर्वकाल इत्यर्थः ॥ १ ॥

**पंचविहो पण्णत्तो जिणेहिं इह अण्हओ अणादीओ। हिंसा १ मोस २ मदत्तं ३ अबंभं ४ परिग्गहं ५ चेव ॥२॥**

पञ्चविधः—पञ्चप्रकारः, प्रज्ञप्तः—कथितः, जिनैस्तीर्थंकरैः, इह प्रवचने संसारे वा, आश्रवः कीदृशस्तदाह अनादिकः प्रवाहापेक्षया अनादि अपर्यवसितत्वात् संसारस्य । हिंसा—प्राणिवधः १ । मृषा—असत्यं वचः २ । अदत्तं—परद्रव्यग्रहणं ३ । अब्रह्म—मैथुनं ४ । परिग्रहो—मूर्च्छास्वीकारः । चेव—निश्चितं एते एव आश्रवाः ॥ २ ॥

**जारिसओ जं नामा जह य कओ जारिसं फलं देति [दिंति] । जेविय करेंति पावा पाणवहं तं निसामेह ॥३॥**

स आश्रवो यादृशो यत्स्वरूपाकारः यस्य नामानि भवन्ति, यथाकृतः स्वपरिणामेन निष्पादितः सन् यादृशं फलं दत्ते, येऽपि च संसारिणः पापात्मानः कुर्वन्ति, प्राणिवधं—प्रथमाश्रवद्वारं हिंसारूपं तत् निशामयत मम कथयतः त्वं शृणु ॥३॥

**पाणवहो नाम एसो जिणेहिं भणिओ—अथालापकः**

प्राणिवधनामा एष अग्रे वक्ष्यमाणः जिनेन्द्रैर्भणितः । अथालापकं सूत्रं.

**पावो १ चण्डो २ रुद्दो ३ खुद्दो ४ साहस्सिओ ५ अणायरिओ ६ णिग्घिणो ७ णिस्संसो ८ महब्भओ ९ पइभओ १० अतिभओ ११ बीहणओ १२ तासणओ १३ अणज्जो १४ उव्वेयणओ य १५ णिरवयक्खो १६ णि-**

**द्धम्मो १७ णिप्पिवासो १८ णिक्कलुणो १९ निरयवासनिधणगमणो २० मोहमहब्भयपयट्टओ २१ मरणवेमणस्सो २२ पढम अहम्मं अव्वयस्स ॥ १ ॥**

पापप्रकृतीनां बन्धकत्वात् पापः १ । क्रोधोत्कटत्वात् चण्डः २ । तीव्ररसपरिणमनत्वात् रुद्रः ३ । द्रोहकारित्वात् क्षुद्रः ४ । सहसा अविचार्य कार्यत्वात् साहसिकः ५ । अनार्यैर्म्लेच्छादिभिराचरितत्वादनार्यः ६ । निर्गता घृणा—करुणा पापजुगुप्सा इति निर्घृणः ७ । नृशंसो निःशूकः श्लाघाऽनाशंसकः ८ । महाभयहेतुत्वात् महाभयः ९ । प्रतिप्राणिनां भयनिमित्तत्वात् प्रतिभयः १० । अतिभयं—एतस्मात् अन्यत् भयं नास्ति 'मरणसमं नत्थि भयमिति' वचनात् ११ । भापनकः—चित्तोद्वेगत्वात् ॥१२॥ त्रासकः—अकस्माद्भयविधानात् ॥१३॥ अनार्योपेतत्वात् अनार्यः ॥१४॥ चित्तविप्लवकारित्वात् उद्वेगकरः ॥१५॥ चकारः समुच्चये । निर्गता परप्राणरक्षाऽपेक्षा वाञ्छा आकांक्षा यस्मिन् सः निरपेक्षः ॥१६॥ निर्गतः श्रुतचारित्रधर्मात् इति निर्द्धर्मः ॥१७॥ निर्गतः पिपासा वध्यं प्रति स्नेहः परप्राणिषु जीवितव्यतृषाऽपि नास्ति ॥१८॥ निर्दयत्वात् निःकरुणः ॥१९॥ नरकः स एव आवासः तत्र, निधनं—मरणं तत्र गमनं—प्रापणं पर्यवसानं यस्य स नरकावासनिधनगमनः ॥२०॥ मोहो अज्ञानं तदेव महद्भयं तत्प्रवर्त्तकः क्वचित् प्रवर्द्धक इति पाठः ॥२१॥ मरणेन हेतुना देहिनां वैमनस्यं दीनमनःकारकः ॥ २२ ॥ प्रथमं आद्यं मृषावादादिद्वारापेक्षया न तु प्रवाहाऽपेक्षया अनाद्यपर्यवसानत्वात् आद्यं आश्रवद्वारं इत्यर्थः ।

अधर्मस्य अव्रतस्य इमानि विशेषणानि यथादर्श इति द्वारं व्याख्यातं, यन्नामेति द्वारं व्याख्यानयन्नाह—

**इमाणि नामधेज्जाणि [ तस्स य नामाणि इमाणि ] गोण्णाणि होंति तीसं, तं जहा—पाणवहं १ उम्मूलणा**

सरीराओ २ अवीसंभो ३ हिंसविहिंसा ४ तहा अकिच्चं च ५ घायणा ६ मारणा ७ वहणा ८ उद्दवणा ९ निवाय-णाय १० आरंभसमारंभो ११ आउयकम्मस्सुवद्दवो भेयणिट्ठवणगालणा य संवट्टगसंखेवो १२ मच्चू १३ असंजमो १४ कडगमद्दणं १५ वोरमणं १६ परभवसंकामकारओ १७ दुग्गतिप्पवाओ १८ पावकोवो य १९ पावलोभो २० छविच्छेयकरो २१ जीवियंतकरणो २२ भयंकरो २३ अणकरो य २४ वज्जो २५ परितावणअण्हओ २६ विणासो २७ निज्जवणा २८ लुंपणा २९ गुणाणं विराहणत्ति ३० चिय तस्स एवमादीणि णामधेज्जाणि होंति तीसं ॥ २ ॥

तस्य प्राणिवधस्य, चकारः पुनरर्थे, इमानि वक्ष्यमाणानि अभिधानानि नामानि, गुणैनिष्पन्नानि भवन्ति–त्रिंशत् तद्यथा–यत्स्वरूपेण दर्शयति–प्राणिनां जीवानां वधो घातो हननं । १ । वृक्षस्य यथा उन्मूलना तथा शरीरतो जीवस्य उन्मूलना । २ । अविश्वासो जीवानां अविश्वसनीयः । ३ । हिंसानां विहंस्या एतावता किं अरूपी हिंस्य एव न तदा हिंसा कथं स्यात् इति हिंसाविहिंसा सा स्वरूपत आत्महिंसा एव तदाशयत्वात् । ४ । तथा पुनः अकृत्यं अकरणीयं । ५ । घायणा–घातना । ६ । मारणा एकार्थाः परं वधबन्धादिना भेदः । ७ । वहणा–प्राणपीडाकारित्वात् । ८ । उपद्रवणा–उत्पातोत्पादकत्वात् । ९ । निपातना–त्रयाणां मनोवाक्कायानां अथवा देहयुक्तेन्द्रियाणां जीवस्य पातना । १० ! आरम्भः कृष्यादिव्यापारस्तेन समारम्भो आरम्भसमारम्भः । ११ । आयुः कर्मण उपद्रवो भेदः तस्य निष्ठापनं गालनं 'अज्झवसाण निमित्ते' इत्यादिरूपेण, चकार समुच्चयार्थः संवर्त्तकः संक्षेपकः सर्वबलसामर्थ्यादीनां संक्षेपकारकः । १२ ।

इति त्रिंशत् संख्यापूरणाय नाम एकं अन्यथा त्रीणि नामानि भिन्नानीति गमकपदं एकार्थम् । १२ । मृत्युः परलोकगमनकालः । १३ । असंयमः—अविरतिः । १४ । कटकेन सैन्येन कलिंजेन आक्रम्य मर्दनं कटकमर्दनं । १५ । व्युपरमणं—प्राणेभ्यः उपरमणं । १६ । परभवसंक्रामणकारकः प्राणातिपातस्यैव परभवगमनं । १७ । दुर्गतौ—दुष्टगत्यां प्रपातः—पतनं गर्त्तायामिव यस्य सः दुर्गतिप्रपातः । १८ । पापरूपत्वात् पापः कोपकारित्वात् कोपः द्वावपि नाम एकार्थवाचि । १९ । पापं अपुण्यं लुभ्यति इति पापलः अथवा पापं लातीति पापलः । २० । च्छविः—शरीरं तस्य च्छेदं करोतीति च्छविच्छेदकरः । २१ । जीवितव्यं प्राणधारणं तस्य अन्तकरः । २२ । भयानि सप्तभयानि तानि करोतीति भयङ्करः । २३ । ऋणं दुःखं पापं वा करोतीति ऋणकरः । २४ । वज्रमिव वज्रं गुरुत्वात् महामोहहेतुत्वात् । २५ । परितापकारी मृषावादादि अन्ये आश्रवा अस्मिन् भवन्तीति परितापाश्रवः । २६ । विनाशो नाशः प्राणानां इति गम्यं । २७ । निर्यता निर्गच्छता परभवे संसारपरिभ्रमणशीलरूपे नियतना । २८ । लोपना-च्छेदनं । २९ । गुणानां ज्ञानदर्शनचारित्रजीवगुणानां विराधनाकारित्वात् । ३० । इति उपदर्शने, अपि—समुच्चये, तस्य प्राणि-वधस्य, एवमादीनि उक्तस्वरूपाणि, नामानि अभिधानानि, त्रिंशत् सङ्ख्याकानि भवन्ति—वर्तन्ते। जं नामा एतत् द्वारं वर्णितं द्वितीयं। अथ जह कओ जारिसं फलं दिंति द्वारं तृतीयं तद्वर्णयन्नाह—

अथ वर्णनालापकः—पाणिवहस्स कलुसस्स कडुयफलदेसगाइं तं च पुण करेंति केवि पावा अस्संजया अविरया अणिहुयपरिणामदुप्पयोगा पाणवहं भयंकरं बहुविहं बहुप्पगारं परदुक्खुप्पायणप्पसत्ता इमेहिं तसथावरेहिं जीवेहिं पडिणिविट्ठा, किं ते? पाठीन-तिमितिमिंगिल—अणेगझस—विविहजातिमंडुक—दुविहकच्छभ-

**णक्कचक्क–मगरदुविह–मुसंढ–विविहगाह–दिलिवेढय–मंडुय–सीमागार–पुलक–संसुमार बहुप्पगारा जलयरविहाणा कए य एवमादी ।**

तस्य पूर्वोक्तत्रिंशन्नामकस्य प्राणातिपातस्य, कलुषस्य मलिनस्य पापस्य, कटुकफलदर्शकानि–असुन्दरभवायतिमूलानि तेषां नामानि, तं–प्राणातिपातं, च–पुनरर्थे, कुर्वन्ति पापात्मनः केचन अपि पुनः न तु सर्व इत्यर्थः। कीदृशाः कुर्वन्ति ? तान् आह–असंयता अजितेन्द्रियाः, अविरताः तपोऽनुष्ठाने अरताः, अनिभृतः–अनुपशांतः अस्थिरचित्तत्वात् परिणामश्चित्ताभिप्रायः, प्रयोगो दुष्टमनोवाक् कायव्यापारो येषां ते । ते पापाः प्राणिवधं सर्वप्राणिभयंकरं भयोत्पादकं प्राणिवधकरणस्य बहवः प्रकारा यस्य तस्य बहुप्राणिषु भवन्ति । कीदृशाः पापाः ? परेषां जन्तुनो दुःखोत्पादनप्रसक्ताः जन्तूपीडाकरणे रता इत्यर्थः एतेषु प्रत्यक्षेषु त्रसनामनिष्पन्नेषु स्थावरेषु एकेन्द्रियादिषु वा तत् अरक्षणतो द्वेषवन्तः परिनिविष्टाः कथं कथं प्राणिवधं कुर्वन्तीत्यर्थः। पाठीना मत्सविशेषाः। तिमितिमिंगिला महामत्स्याः तेऽपि महामत्स्यतमा वा दालादयो, विविधप्रकाराः झषा मत्स्येषु क्षुद्रमत्स्याः, विविधजातीया मण्डुकाः भेकजातौ प्रसिद्धाः, सूक्ष्ममत्स्यखलमत्स्ययुगलमत्स्यादयो, द्विविधाः कच्छपाः १ मांसकच्छपाः २ अस्थिकच्छपाश्च, नक्रचक्राः मत्स्यजातिविशेषाः, मकराः जलचरविशेषाः द्विविधाः स्थले जले जाताश्च, मूढसंढमत्स्या विविधजलोत्पन्नाः, ग्राहा जलजन्तुविशेषमत्स्याः, दिलिवेष्टकाः पुच्छेन ये वेष्टयन्ति ते, मण्डूकसीमाकारपुलकादयः सर्वेऽपि ग्राहभेदाः, संसुमाराः जलचरविशेषाः, इत्यादयो बहुप्रकाराः तान् घ्नन्तीति वक्ष्यमाणेन योगः, जलचराणां विधानानि भेदानि कृतानि एवमादयो ज्ञेयाः ।

**कुरंग–रुरु–सरह–चमर–संबर–उरब्भ–ससय–पसय–गोण–रोहिय–हय–गय–खर–करह–खग्गी–वानर–**

गवय-विग-सियाल-कोल-मज्जार-कोलसुणगा--सिरियंदलगावत्त-कोकतिय-गोकन्न-मिय-महिस-वियग्घ-छगल-दीविग-साण-तरच्छ-अच्छभल्ल-सद्दूल-सीह-चिल्लल-चउप्पयविहाण कएय एवमादी ॥

कुरङ्गाः मृगाः, रुरुस्तज्जातीयमृगविशेषाः, सरभा महाऽटव्यां पशुविशेषाः लोकेऽष्टापदनामानः परासरेति पर्याया ये हस्तिनमपि पृष्ठे समारोपयन्ति, चमराः अरण्यगावः, संवरा येषां श्रृङ्गेऽनेकशाखा भवन्ति, उरभ्राः मेषाः, शशाः-शशकाः, पसयाः--द्विखुराआटव्यपशुविशेषाः, गोणा गावः, रोहिताश्चतुष्पदविशेषाः, हया अश्वाः, गजा हस्तिनः, खरा गर्दभाः, करभा उष्ट्राः, खड्गिनोयेषां पार्श्वयोः पक्षवत् चर्माणि भवन्ति श्रृङ्गं चैकं शिरसि भवति। वानरा मर्कटाः, गवयाः वर्तुलकण्ठाः संढाः, वृकाः इहामृगाः [वरगडा इति लोकभाषायां,] श्रृगालाः जम्बूकाः, कोलाः उन्दराकृतयः, माज्जीरा बिलाडाः, कोलसुनकाः महीशूकराः अथवा क्रोडः शूकरः श्वानः, श्रीकन्दलकाः एकखुरजीवविशेषाः, आवर्त्ता अपि तज्जातीयाः, रात्रौ कों रवंति ते कोंकतिकाः चतुष्पदविशेषाः, गोकर्णाः स्यालघोसा लोकरूढ्या, मृगाः हरिणाः, महिषाः यमवाहनाः, व्याघ्राः प्रतीताः, छगलाः अजाः, द्वीपिकाः ['दीपडा' इति लोकभाषगा,] श्वानाः आटव्या नाहरः, तरक्षा भल्लूका ['रींछ',] अछभल्लूकाः मृगविशेषाः, शार्दूलाः, सिंहाः शूण्डावन्तो हरयः, चिल्लणाः चित्रकाः एवमादीनि पूर्वोक्तानि चतुष्पदाभिधानानि कृतानि विहितानि।

अयगर-गोणस-वराह-मउलि-काकोदर-दब्भपुप्फ-आसालिय-महोरगोरगविहाण कएय एवमादी ॥२॥

अजगराः-उरपरिसर्पविशेषाः, गोणसाः-निःफणाहिविशेषाः ['चाकलुं' इति भाषा,] वराहिणो-दृष्टिविषाहयः, मुकुलिकाः फणान् कुर्वन्ति, काकोदराः सामान्यविषधराः ['परड' इति भाषा,] दर्भपुष्पा विरलीकृतफणाः, आसालिका महोरगाश्चोरपरि-

सर्पविशेषाः तत्राऽऽसालिका यच्छरीरं द्वादशयोजनप्रमाणं उत्कर्षतो भवति क्षयकाले च महानगरे स्कन्धावारादीनां मध्ये उत्पद्यन्ते आसालिका द्वीन्द्रिया अप्युक्ता सन्ति ते चाऽन्ये इति ज्ञेयं। महोरगा मनुष्यक्षेत्रबहिर्भाविनो सहस्रयोजनप्रमाणानि विविधप्रकाराणि उरगनामानि कृतानि इत्यादीनि।

**छरल-सरंब-सेहसल्लग-गोधा-उंदर-गउल-सरड-जाहग-मंगुस--खाडहिल--चाउप्पाइआ-घिरोलिया-सिरीसिव-गणे य एवमादी ॥३॥**

क्षारलाः-भुजपरिसर्पविशेषाः, शरम्बास्त एव सेह्ना जाहकाः, [सेहला इति भाषा,] सँल्लकाः [ 'सीसोलिया' इति भाषा] गोधा [' गोह ' इति लोकभाषा]। उन्दरा मूषकाः, नकुलाः ['नउलीया' इति लोकभाषा] शरटाः कृकलशाः ['कांकेंडा' इति लोकभाषा]। कण्टकावृतशरीराः जाहकाः, मंगुसास्तज्जतीयाः, कृष्णशुक्लपट्टाङ्कितरेखाः ['खसखली' इति भाषा] चातुष्पादिकास्तज्जातीया एव, गृहगोधा [' घीरोली ' इति भाषा,]। सरिसृपगणः भुजपरिसर्प्पाः, इत्याद्यनेकभुजपरिसर्प्पजातयः।

**कादंबक-बक-बलाहक-सारस-आडा-सेतीय-कुलल-वंजुल-पारिप्पव-कीर-सउण-दीविय-(पीपीलिय) हंस-धत्तरिट्ठ-पवभास-कुलीकोस-कोंच-दगतुंड-ढेणियालग-सुचीमुह-कविल-पिंगल-कागकारंडग-चक्कवाग-उक्कोस-गरुड-पिंगुल-सुय-बरहिण-मयणसाल-नंदीमुह-नंदमाणग-कोरंग-भिंगारग-कोणालग-जीवजीवक-तित्तिर-वट्टग-लावग-कपिंजलक-कवोतक-पारेवग-चटग-ढिंक--कुक्कुड-रमसर-मयूरग-चउरग--हयपोंडरिय-**

करक–चीरल्ल–सेण–वायस–विहग–सेण–सिण–चास-वग्गुलि–चम्मट्ठिल–विततपक्खी–समुग्गपक्खी-खहयर–विहाणा कए य एवमादी ॥ ४ ॥

कादम्बाः हंसविशेषाः, वकाः प्रतीताः, बलाकाः शुक्लपक्षिणः, सारसाः ['सारसडां' इति लोकभाषायां] आडा [आडि'इति भाषा] सेतीका जलपक्षिणः, कुललाः रक्तचरणहंसाः, वंजुलाः खंजनाः, पारिप्लवाः चपलजातीयाः, कीराः शुकाः, शकुनिकाः त्तित्तरणाः, दीपिकाः [देवीति भाषा,] हंसाः श्वेतपक्षाः, धृतराष्ट्राः कृष्णचञ्चुहंसाः, पवभासाः कृष्णाननाः, कुटीक्रोशाः शकुनाः सामान्यपक्षिणः, क्रौञ्चाः क्रोञ्चपक्षिविशेषाः, दगतुण्डा जलकुर्कटी, ढेलिका लगा जलचरविशेषाः [ 'काङ्कणियारा ' इति भाषा, ] शूंचीमुखी [' सुघरीति ' लोकभाषा, ] कपिलाः कारंडवाः जलचरविशेषाः, पिङ्गलाः पक्षिविशेषाः, काकाः पर्वतीयाः, करण्डकाः [ 'वतक' इति भाषायां,] चक्रवाकाः, उत्क्रोशाः पक्षिविशेषाः, गरुलाः गुरुडजातीयाः, पिङ्गुलाः रक्तशुकाः, शुकाः रक्ततुण्डाः, वर्हिणो मयूराः, मदनसालिका ['मीनां' इति भाषा,] नंदीमुखाः तज्जातीया, नन्दमानकाः द्व्यङ्गुलप्रमाणशरीराः भूमिवर्त्तिनः, कोरकाः कोणालकाः, भृङ्गारिकाः सारिकाजातयः, कोणालाः चतुरस्राकाराः, जीवजीवाश्वकोराः तैत्तिराः वर्त्तकाः एते सर्वेऽपि लावकाः एकजातीयाः, परपक्षचरणादिभेदकृतो ज्ञेयाः, लोके ['लावडां' 'होला' 'कमेडी' इति भाषाः,] कपिञ्जलाः, कपोताः पारावताः ['पारेवा' इति भाषा,] चटकाः, ढिंकाः पानीयचारिणः, कुर्कटकाः, मसरमयूरकलापरहिताः मयूरविशेषाः, चतुरगचकोराः हयपौंडरीकादयः सर्वेऽपि हृदनीरवर्त्तिनो जलचरविशेषाः, करकाः द्रहोद्भवाः, चीरिलिकाः पक्षिविशेषाः, श्येनाः गृध्राः, वायसाः काकाः, विहगाः पक्षिणः, श्येनाः सिश्चानकाः, शंकुनी ['काचली' इति भाषाः,] चासाः प्रतीताः, वेल्गुलिकाः चर्म्मचटिकाः [वडवागुलि लोकभाषा,]

चर्ममयी सर्वतनुः [ चमाचडीति भाषा, ] महावल्गुलिकाः विततपक्षिणः, समुद्रपक्षिणश्च मनुष्यक्षेत्रबहिर्वर्त्तिनः, खचरविधानाः, कृतानि पूर्वोक्तानि इत्येवमादीनि नामानि प्रतिघ्नन्ति

**जलथलखगचारिणो उ पंचिंदिए पसुगणे बियतियचउरिंदिए विविहे जीवे पियजीविए मरणदुक्खपडिकूले वराए हणंति बहुसंकिलिट्ठकम्मा ॥ ५ ॥**

जलस्थलखचारिणः। पञ्चेन्द्रियपशुगणानुपलक्षणात् द्वीन्द्रियकृमि–गण्डोल–जलौक–पूतरक–वालक–मङ्गलामातृवहामभृतिषु स्पर्शन–रसनरूपद्वीन्द्रियेषु, त्रीन्द्रियस्पर्शनरसनघ्राणरूपेषु मत्कुण–यूका–लिक्षा–पिपीलिकोपदेहिका–श्रृङ्गालीप्रभृतिषु, स्पर्शन–रसन–घ्राण–चक्षुरूपेषु चतुरिन्द्रियेषु भ्रमर–मक्षिका–पतङ्गिका–अन्धिका–तीड–दंश–मशक–वृश्चिकप्रभृतिषु विविधजातिषु प्राणिषु, कीदृशान् जीवान् ? प्रियं वल्लभं जीवितं प्राणधारणं येषां ते, मरणस्य दुःखस्य वा प्रतिकूला वा ये ते तान्, वरं निरन्तराचरणतया प्रधानं अकं--दुःखं येषां ते वराकाः तान् वराकान्--दीनान् घ्नन्ति--विनाशयन्ति, बहुसंक्लिष्टकर्माणः सत्त्वा ये भवन्ति ते तान् पूर्वोक्तान् जन्तून् विनाशयन्तीत्यर्थः ।

**इमेहिं विविहेहिं कारणेहिं, किं ते?, चम्म–वसा–मंस–मेय–सोणिय–जग–फिप्फिस–मत्थुलुंग–हिययंतपित्त–फोफसं–दं तट्ठा अट्ठिमिज–नह–नयण–कण्णण्हारुणि–नक्क–धमणि–सिंग–दाढि–पिच्छ–विस–विसाणवालहेउं–हिंसंति य भमरमधुकरगणे रसेसु गिद्धा तहेव, तेइंदिए सरीरोवकरणट्ठयाए किंचणे बेंदिए बहवे वत्थोहरपरिमंडणट्ठा ॥ ६–७ ॥**

एभिः—वक्ष्यमाणैर्विविधैः—विचित्रैः, कारणैः—प्रयोजनैः कृत्वा किं तत्प्रयोजनं? चर्म—त्वक्, वसा—शारीरस्नेहविशेषः, मांसं—पलं कठिनरुधिरं, मेदो—देहधातुविशेषः, शोणितं—रुधिरं, यकृत्—दक्षिणकुक्षौ मांसग्रन्थिः, फिप्फसं—उदरमध्यावयवविशेषः, मस्तक मांसं मेच्छुलुङ्गकः ['भेजो' इति भाषा पीहो-पेटुची पितुंडादिभाषा] हृदयमांसं, अन्त्राणि [ 'आंतरडां' भाषा,] फोफसं शरीरावयवविशेषः इत्याद्यर्थं हिंसन्ति, दन्ताः दशनास्तेषां अर्थाय, अस्थिमज्जार्थं, नखार्थं, नयनानि लोचनानि तदर्थं, कर्णार्थं, स्नायु स्नसा तदर्थं, नक्कं—नासिका धमन्यो—नाड्यः शृङ्गं—विषाणं दंष्ट्रा—अन्त्यदन्ताः पिच्छं—पत्रं विषं—कालकूटादि विषाणं—हस्तिदन्तः वालाः—केशा एतेषां हेतुप्रयोजनार्थं हिंसन्ति घ्नन्ति ।

भ्रमराः कृष्णाः मधुकराः भ्रमराः तेषां गणाः समुहाः तान् हन्तीति योगः रसेषु गृध्रा मधु गृह्णार्थमित्यर्थः। तथैव तद्वत् त्रीन्द्रियादीन्—यूकामत्कुणादीन् शरीरस्य उपकारार्थं अथवा शरीरं उपकरणं संस्कारसंधानाद्यर्थं वा, तान् किंभूतान्? कृपणान् कृपास्पदीभूतान् द्वीन्द्रियादीन् हन्ति बहून्—प्रचूरान्। वस्त्रं उहरत्ति उपगृहाणि आश्रयविशेषः तेषां परिमण्डनं—अलंकरणं वस्त्रादीनां, रञ्जनं गृहादीनां, शङ्ख—शुक्तिचूर्णादिभिर्धवलनं तदर्थं वा। तत्र वस्त्रार्थं पट्टसूत्रसंपादने कृम्यादीनां हिंसा, मृतिका-जलादिद्रव्येषु पुतरकादीनां घातः।

अण्णेहि य एवमाइएहिं बहूहिं कारणशतेहिं अबुहा इह हिंसंति तसे पाणे इमे य एगिंदिए बहवे वराए तरसे य अण्णे तदस्सिए चेव तणुसरीरे समारंभंति। अत्ताणे, असरणे, अणाहे, अबंधवे, कम्मनिगडबद्धे, अकुसलपरिणाममंदबुद्धिजणदुव्विजाणए, पुढविमए, पुढविसंसिए, जलमए, जलगए, अणलाणिलतणवणस्सइग-

णनिस्सिए य तम्मयतज्जिए चेव तदाहारे तप्परिणयवण्णगंधरसफासबोंदिरूवे अचक्खुसेय चक्खुसे य तसकाइए असंखे थावरकाए य सुहुमबायरपत्तेयसरीरनामसाधारणे अणंते हणंति अविजाणओ य परिजाणओ य जीवे इमेहिं विविहेहिं कारणेहिं, किं ते ?, ॥ ८ ॥

अन्यैः एवमादीभिः बहुभिः कारणशतैः अबुधा-मूर्खा अविवेकिनः इह-जीवलोके हिंसन्ति-विनाशयन्ति घ्नन्ति त्रसान् प्राणान्। तथा इमान्-प्रत्यक्षादीन् इमे एकेन्द्रियादीन् पृथिव्यादीकान् वराकान्-तपस्विन अकामक्लिष्टसहकान् त्रसान्, अन्यान् तदाश्रितान् च पुनः तन्निष्ठां प्राप्तान्, चेव-निश्रितं, किंभूतान्? तनुः कृशं शरीरं येषां ते तान् समारम्भन्ते-घातमारम्भन्ते किंभूतान्? अत्राणान्-अनर्थप्रतिघातकाभावात्, अर्थं प्रति प्रापकाभावात् अशरणानित्यर्थः, अत्राणान्-स्वयं रक्षितु मशक्यान्, परैरक्षितुमशक्या अशरणा इत्यपि अत एव अनाथान्-योगक्षेमकारि-नायकाऽभावात्, अत एव अबान्धवान्-स्वजनसंपाद्यकार्याऽभावात्, तत एव कर्मभिः कर्माण्येव वा बद्धानि-निगडानि येषां ते तान्, दयारहितत्वेनाऽकुशलपरिणामान्, मिथ्यात्वोदयात् यो जनो-लोको मन्दबुद्धिलोकस्तेन दुर्विज्ञेयाः ज्ञातुमशक्या ये ते तान्, पृथिवीमयान् पृथिवीकायिकान्, पृथिवीसंश्रितान् अलसादित्रसान्, एवं जलमयान्, जलगतान् पूतरकादीन्, अनलस्तेजः-कायः, अनिलो वायुकायः, तृणं-वनस्पतिगणो-बादरवनस्पतीनां समुदायः, एतन्निश्रितान् च एतदुपजीविकान् त्रसान् इति हृदयं। तेषामेवाऽनिलाऽनलतृणवनस्पतिगणानां विकारास्तन्मया अनलकायिकादय एव तथा तेषामेव योनिकास्तद्योनिका एव ते पृथिव्यादय एव आधारो येषां ते तान्, तथा तदेव आहारो येषां ते तान्, तेषां एव परिणता-बद्धा वर्णगन्धरसस्पर्शैः

या बोन्दी शरीरं तस्यैव रूपं स्वभावो येषां ते तान्, अचक्षुर्ग्राह्यान् आगमप्रमाणगम्यान्, चाक्षुषान् चक्षुर्ग्राह्यान् वा, त्रसनाम-कर्मोदयवर्त्तिजीवराशिस्तत्रभवान् असङ्ख्यान् सङ्ख्यातीतान्, तिष्ठन्तीति स्थावराः स्थावरनामकर्मोदयवर्त्तिनः, कायः समुदायो राशिरिति पर्यायाः ॥ सूक्ष्मनामकर्मोदयवर्तिनः, बादरनामकर्मोदयवर्त्तिनः, प्रत्येकनामकर्मोदयवर्तिनः साधारणनाम-कर्मोदयवर्तिनः, शरीरं शरीरं प्रति एक एक जीवः प्रत्येकः अनन्तजीवैः संभूय एकं शरीरं निष्पादनं तत्साधारणनाम ते अनन्तान् ये साधरणाः तान् घ्नन्तीति तान्। किंभूतान्? स्ववधपरिज्ञानं अजानत एकेन्द्रियादीन्, स्ववधपरिज्ञानं तत्र त्रसादीन् सुखदुःखमनुभवतः तान् जीवान् प्रति इमैः प्रत्यक्षवक्ष्यमाणैः विविधैः कारणैः किं तत्प्रयोजनं?

**करिसण-पोक्खरणी-वावि-वप्पिणि-कूव-सर-तलाग-चिति-चेतिय खाइयं आराम-विहार-थूभ-पागार-दार-गोउर-अट्टालग-चरिया-सेउ-संकम-पासाय-विकप्प-भवण-घर-सरण-लयण-आवण-चेइय-देवकुल-चित्तसभा-पवा-आयतणा-वसह-भूमिघर-मंडवाण कए भायणभंडोवगरणस्स य विविहस्स य अट्ठाए पुढविं हिंसंति मंदबुद्धिया ॥ ९ ॥**

कर्षणं कृषिः, पुष्करिणी-कमलवती वापी चतुष्कोणा पुष्करिणी पुष्करवती वापी इत्यप्यर्थः, वप्राः केदाराः, कूपः निपानं, सरो-लघु, तटाका-महत्सरः, चितिभित्यादिचयनं चेति मृतदहनार्थं काष्ठस्थापनं, खातिका-परिखा, आरामो-वाटिका, विहारो बौद्धाश्रयः, स्तुपः चितोपरिगृहं, प्राकारः शालः ['गढ' इति भाषा,]। द्वारं ['बार' इति भाषा,] गोपुरं प्रतोली कपाटं वा, अट्टालकः गढोपरि आश्रयविशेषः, चरिका नगरप्राकारयोरन्तराले अष्टहस्तप्रमाणः मार्गः, सेतुः पालिः, सङ्क्रमो विषमोत्तरणमार्गः,

प्रासादो राजभवनादीनि विकल्पास्तद्भेदाः चतुःशाला, भवनानि इष्टिकादिमयानि, गृहाणि तृणमयानि, शरणानि सामान्यगृहाणि, लयनानि–पर्वतनिःकुट्टितगृहाणि, आपणाः हट्टाः, चैत्यानि यक्षादीनां प्रतिमास्थानानि, देवकुलानि–सशिखरदेवप्रासादाः, चित्तसभा–चित्रवन्मण्डपः, प्रपा–जलदानस्थानं, आयतनं देवायतनं, आवसथः–तापसाश्रमः, भूमिगृहं प्रसिद्धं, मण्डपाः–छायाद्यर्थं पटमण्डपाः इत्याद्यनेकआश्रयविशेषाः एतेषां कृते--निमित्तं हिंसन्तीत्यर्थः । भाजनानि पात्राणि सौवर्णादीनि भाण्डानि, मृन्मयानि क्रयाणकानि, लवणादीनि वा उपकरणानि उदूखलादीनि अधिकरणानि तेषां विविधस्य वा अर्थाय हेतवे पृथिवीकायिकान्, हिंसति । मन्दबुद्धिकाः मिथ्यात्वोदयेन हीनसत्त्वाः ॥

जलं च मज्जणय–पाण–भोयण–वत्थधोवण–सोयमादिएहिं ॥ १० ॥

जलं च अप्कायिकान् हिंसन्ति मज्जनं–स्नानं पानं–भोजनं–वस्त्रधापनं–शौचनं–आचमनं एवमादिभिः कारणैः अप्कायिकान् विनाशयन्ति ॥

पयण–पयावण–जलावण–विदंसणेहिं अगणिं ॥ ११ ॥

पचनं स्वयं, पाचनं अन्यैः ओदनं वा, ज्वलापनं अग्नेरुद्दीपनं, विदर्शनं अन्धकारस्थवस्तुप्रकाशनं एभिः कारणैः अग्निकायान् विनाशयन्ति ॥

सुप्प–वियण–तालयंट–परिथुनक–हुणमुह–करयलसग्गपत्त–वत्थएवमादिएहिं अणिलं ॥ १२ ॥

तथा सूर्पकं प्रतीतं, व्यञ्जनं वायूदीरकं, तालवृन्तं तदेव परं द्विपुटादिवस्त्रं, पृथुनकं मैयूराङ्गं ['पंखो' इति भाषा,] तथा

हुणं पत्रादि मुखं-आस्यं करतलं हस्तं तस्मात् सर्गजातमित्यर्थः, पत्रं वृक्षादीनां पर्णं, वस्त्रं अंशुकाचलं, इत्यादिभिर्वातोदीरणैः वायुकायिकान् विनाशयन्ति ॥

अगार-परिया [डिया] र-भक्ख-भोयण-सयणासण-फलक-मुसल-उखल-तत-विततातोद्य-वहणवाहण-मंडव-विविहभवण-तोरण-विटंग-देवकुल-जालय-द्धचंद-निज्जुहग-चंदसालिय-वेतिय--णिस्सेणि-दोणि-चंगेरी-खील-मंडक-सभा-पवा-वसह-गंध-मल्लाणुलेवणं-घर-जुय-नंगल-मेइय-कुलिय-संदण-सीया-रह-सगड-जाणजोग्ग-अट्टालग-चरिअ-दार-गोपुर-फलिय-जंत-सूलिया--लउड-मुसंढि-सयग्घी-बहुपहरणा-वरणु-वक्खराण-कए, अण्णेहिं य एवमाइएहिं बहुहिं कारणसएहिं हिंसन्ति ते तरुगणा भणिता भणिएय एवमादी ॥१३॥

आगारं गेहं, परिचारोवृत्तिः खड्गादि कोशोवा, भक्ष्याणि मोदकादीनि, भोजनानि ओदनानि, शयनानि शय्याऽऽसनानि, भद्रासनादीनि, फलकानि अवष्टम्भदानादिनिमित्तानि, मुशलानि उदूखलादीनि, उखलेत्ति तदाधारमस्तरमयानि काष्ठमयानि वा, ततानि वीणादीनि, विततानि पटहादीनि, आतोद्यानि वादित्राणि विशेषाणि, वहनानि यानपात्राणि, वाहनानि शकटादीनि, मण्डपाः प्रतीताः, [ मांडवा ] विविधानि चतुःशालादीनि भवनानि, तोरणानि द्वारशोभाकारकानि, विटङ्कः कपोतपाली [' छाजा ' इति भाषा, ] देवकुलं क्षेत्राधिष्ठातृप्रमुखाणां, जालकं छिद्रयुक्तो गृहावयवः, अर्द्धचन्द्रः सोपानजातिविशेषः, [3]निर्यूहं द्वारोपरिवर्त्ति निर्गतदारु अन्तरङ्ग [ 'मथाला' इति भाषा, ] चन्द्रशाला गृहोपरिबद्धभूमिः, [' अटालीति ' भाषा,] वेदिकाः चत्वराः, निश्रेणिः अवतरणी ['नीसरणी' भाषा,] द्रोणी नावा, चंगेरी महती काष्ठनावा, [गलेन्तगरा छकोटी इति भाषा,] कीलः

शङ्कुः, मुण्डका वस्त्रपटकुटी, सभाजनआस्थानिका, मपा जलदानस्थानं, आवसथः तापसाश्रमः, गन्धाः चूर्णविशेषाः, माल्यं कुसुमं, अनुलेपनं विलेपनं, अम्बराणि वस्त्राणि, धुँपो युगं ['जूंसर' इति भाषा,] लांगलं हलं, 'मेतिकं येन क्षेत्रं मृद्यते ['समार' भाषा,] कुँलिकं हलभेदाः [बवटा त्रेवटा भाषा,] स्यन्दनो रथः स द्विविधः सांग्रामिको देवयात्रिकश्च सङ्ग्रामिकस्य कटिप्रमाणं वेदिका भवति, शिबिका पुरुषसहस्रवाहिनीयत्कूटाकारशिखराच्छादितो जम्पानविशेषरथः मतीतः, वृषभाश्च यानयुग्यः, शँकटं गंत्री, ['गाडलो' भाषायां] यानं तद्विशेषः वहिल भाषायोग्यं गोल्लदेशमसिद्धो द्विहस्तप्रमाणवेदिकोपशोभितो जम्पानविशेषः, अट्टालकः प्राकारोपवर्ति आश्रयविशेषः, चरिका नगरप्राकारंतराले अष्टहस्तमानो मार्गः, द्वारं मतीतं, परिघाऽर्गलाफलिकं, खातिकाच्छादनयन्त्राणि अरघट्टादीनि, शूँलिका वध्यप्रोतनकाष्ठं अथवा शूलकस्तीक्ष्णभेदनकाष्ठं ['खनेतु' भाषा,] लकुटः सामान्यत्वेन काष्ठानि, 'मुसंढिः' प्रहरणविशेषः, शँतघ्नी महती यष्टिः ['नालिजंबूरा' इति भाषा,] बहूनि प्रहरणानि करवालादीनि, आँवरणं स्फुरकं [छरपलो इति भाषा,] उपस्करं गृहोपकरणं मञ्चकपल्यंकादीनि एतेषां कृते अर्थाय, अन्यैश्च एवमादिभिः बहुभिः कारणशतैः हिंसन्ति–विनाशयन्ति तरुगणान् क्रूरकर्माणः पुरुषा इति योगः तथा भणितान् कथितान्, अभणितान् अकथितान्, एवं प्रकारान् ॥

**सत्ते सत्तपरिवज्जिया उवहणन्ति दढमूढा दारुणमती कोहा माणा माया लोभा हासा रती अरती सोय वेदत्थ जीयधम्मत्थकामहेउ सवसा अवसा अट्ठा अणट्ठा एय तसपाणे थावरे य हिंसंति ॥ १४ ॥**

सत्वान् प्राणिनः कीदृशान् सत्वान् ? सत्वपरिवर्जकान् कातरानुपघ्नन्ति–विनाशयन्ति, ते के दृढमूढा अत्यन्तनिर्विवेकाश्च ते दारुणमतयो भीमाशयाः घ्नन्ति, कस्माद्धेतोः ? क्रोधमत्सरेर्ष्यावशतः मानात् स्वोद्धत्वात्, मायातः शाठ्यात्, लोभात्

गृद्धितः, हास्यात् एतत्पूर्वोक्तजनितात्, रत्यरतिशोकात् अत्र च सर्वत्र पञ्चमीलोपो दृश्यः ॥ वेदार्थानुष्ठानं आचरणम्, धर्मश्च कुलजात्यादेर्जातिकल्पः, अर्थो धनं, काम इच्छा गार्द्धयं शब्दादीनां, अर्थं हेतुप्रयोजनार्थम् ॥ स्ववशाः स्वतन्त्राः स्वाधीना, अवशाः पराधीनाः, अर्थाय प्रयोजनाय-स्वात्मपरिजनदाक्षिण्याद्यर्थं, अनर्थाय निःप्रयोजनत्वेन वा, त्रसप्राणान् स्थावरांश्च, हिंसन्ति-विनाशयन्ति ॥

**मंदबुद्धीया सवसा हणंति, अवसा हणंति, सवसा अवसा दुहओ हणंति, अट्ठा हणंति, अणट्ठा हणंति, अट्ठा अणट्ठा दुहओ हणंति, हस्सा हणंति, वेरा हणंति, रती हणंति, हस्सावेरारता हणंति, कुद्धा हणंति, लुद्धा हणंति, मुद्धा हणंति, कुद्धा लुद्धा मुद्धा हणंति, अत्था हणंति, धम्मा हणंति, कामा हणंति, अत्था धम्मा कामा हणंति ॥ सू-३ ॥**

मन्दाः मिथ्यात्वादयतो निर्विवेकमतयः स्ववशाःघ्नन्ति, परवशाः घ्नन्ति, स्ववशा अवशाश्च दुहतो-उभयतो घ्नन्ति, पुनः एकत्वं सूत्रे प्रतिपादितं तत्तु पराधीनतां एकस्य बहूनां ज्ञापनार्थं। अत्राऽपि चतुर्भङ्गी यथा एको बहूनां पराधीनः १ बहवः एकस्य पराधीनाः २ एकः एकस्य पराधीनः३ बहवो बहूनामिति ज्ञापनार्थं, अर्थाय-प्रयोजनार्थं घ्नन्ति, अनर्थं-निःप्रयोजनं हन्ति, अर्थाऽनर्था उभयतो हन्ति, एवमालापकत्रयं। हास्य-वैर-रति-अरतिभिः त्रिभिः आलापकचतुष्टयं योज्यं ॥ क्रुद्धा-द्वेषिणः घ्नन्ति, लुब्धा-विषयकामाभिलाषतो घ्नन्ति, मुग्धा अज्ञानिनो घ्नन्ति, एवं क्रुद्धलुब्धमुग्धैः सह आलापकत्रयं योज्यं। अर्था धनार्थिनः धर्मधर्मिणोरभेदः धर्मार्थिनो जातमित्यादिकुलाद्यभिमानता, कामिनो-विषयेच्छवो हन्ति, एवं अर्थ-धर्म-कामत्रयेऽपि आलापको योज्यः।

आश्रवे वध्यवधक-प्रयोजनानि

कयरे ते ?, जे ते सोयरिया मच्छबंधा साउणिया वाहा कूरकम्मा [वीउरिया] दीवित-बंधणप्पओग-तप्प-गलजाल-वीरल्लगायसीदब्भ-वाग्गुरा-कूडछलियाहत्था हरिएसा साउणिया य वीदंसगपासहत्था वणचरगा लुद्धगा महुघाया पोतघाया एणीयारा पोसणीयारा सर-दह-दीहिअ-तलाग-पल्लल-परिगालण-मलण-सोत्तबंधण-सलिलासयसोसगा विसगरस्स य दायगा उत्तणवल्लरा दवग्गिणिद्दया पलीवका कूरकम्मकारी इमे य बहवे मिलक्खुजातीया, के ते ?,

तत्र कतरे ये कृष्यादिकारणैः प्राणिनो घ्नन्ति इति प्रश्नः ? अथोत्तरमाह-ये शूकराणां मृगयां कुर्वन्ति ते शौकरिकाः, ये मत्स्यान् बध्नन्ति ते मत्स्यबन्धाः, शकुनान् पक्षिणो घ्नन्ति ते शाकुनिका, ये मृगान् घ्नन्ति ते व्याधाः, क्रूरकर्माणः, द्वीपिका श्चित्रकान् रक्षयित्वा मृगमारणाय बन्धनप्रयोगवन्तः, मत्स्यबन्धनार्थं तत्प्रगलं-बडिशं मत्स्यबन्धनजालं वीरल्लकः-श्येनाभिधानः शाकुनिः मृगादिविनाशाय लोहमयी दर्भमयी वा वागुरा पाशरचना शाकूटा [सा कुटेन] स्थाप्यते पक्षिग्रहणार्थं तरुजालिकायाः, क्वचित् वागुरिया पाठे वागुरिका-मृगजालिका तान् बध्नन्ति ते वागुरिका जालिकायाः, छेलिका कथ्यते सा हस्ते येषां ते तादृशा हरिकेशाश्चाण्डालविशेषाः, कुणिकास्तदीयसेवकाः, वीदंशकपाशहस्ता येन पक्षिणा अन्ये पक्षिणो गृह्णन्ते ते वीदंशाः तदेव पाशो हस्ते येषां ते-तादृशा वनचराः शबराः, लुब्धका व्याधाः [पारधी इति भाषा] मधुघातकाः मधुपातनशीला ये ते, पोता-लघुपक्षिणस्तान् घातकाः, एणी मृगीमृगग्रहणार्थं हरिणीं चारयन्ति ते एणीचाराः, तान् पोषयन्ति ते पोषणीयाराः, सरो-जलाशयः, द्रहो अगाधजलो

१ इत्यपि क्वचिदधिको पाठः

नदः, दीर्घिका सारणी [ नीक इति भाषा ], तटाकः प्रतीतः, पल्वलं—अखातसरः, इत्यादिकान् परिगालनेन—शङ्खशुक्तिमत्स्यादि-ग्रहणार्थं जलनिस्सरणार्थं मलनेन मर्दनेन, श्रोतोवन्धनेन—जलप्रवेशवारणेन, सलिलाशयान् परिशोषयन्ति ये ते तथाविधाः, तथा विषस्य कालकूटस्य द्रव्यसंयोगविषस्य दायका दातारो ये ते, तथा उद्गततृणानां वल्लराणां नवीनद्रोहांकुरक्षेत्राणां दवाग्निना दावानलेन निर्दयं यथा भवति तथा, पलीवगत्ति प्रलीपकाः प्रदीपकाः ये ते, क्रूरकर्म कारिणः, इमे—अग्रे वक्ष्यमाणाः, च—पुनः, अन्येऽपि—अपरेऽपि, बहवो—अनेके, मिलक्खू—म्लेच्छजातीया अनार्या॥ के ते तद्यथा—

अधर्मद्वारे प्राणिवध-कारकाः प्रेत्य तद्-वथास्थाश्च सू—४

सक—जवण—सयर—वब्बर—काय—मुरुंडोदभडग—तित्तिय—पक्कणिय—कुलक्ख—गोड—सींहल—पारस—कोंचंध—दविल—विल्लल—पुलिंद—अरोस—डोंब—पोक्कण—गंधहारग—वहलीय—जल्ल—रोम—मास—बउस—मलया—चुंचुया य चूलियक—कोंकणग—कणग—सेय—मेता पण्हव—मालव—महुर—आभासिय—अणक्ख—चीण—लासिय—खस—खासिया नेहुर मरहट्ठ—मुट्ठिअ—आरब—डोबिलग—कुहण—केकय—हूण—रोमग रुरु—मरुया चिलायविसयवासी य पावमतिणो॥

शकाः शकदेसोद्भवाः, यवनाः तुरुष्काः अथवा यवं दुष्टपापं तत् नयन्ति ते यवनाः, एते सर्वेऽपि तत्तन्नामदेशोत्पन्नदेशभाषावस्त्रभक्षाद्याचारैर्भिन्ना ज्ञेयाः। शवराः, बर्बराः, कायाः, मुरंडा, उदा, भडकाः, त्तित्तिकाः—तित्तियदेशोद्भवाः, पक्कणिकाः—शवरीतो जाताः पक्कणिकाः; कुलाक्षाः, गौडाः, सिंहलाः, पारसाः, क्रौञ्चाः, अन्धाः, दविडत्ति द्राविडाः, विल्वलाः, पुलीन्द्राः, आरोषाः, डोम्बाः, पोकणाः, गंधवाहा गंधहारका वा, बहलीकाः, जल्लाः, रोमाः, मासाः, बकुशाः, मलयाश्च, चञ्चुकाः चचुल्किाः, कोंकणकाः, कनकाः, सेताः, मेदाः, पह्नवाः, मालवा, मधुकरा, आभाषिकाः, अनक्षाः, चीणदेशाः, लासिकाः,

॥१३॥

खसाः, खासिकाः, निष्ठुराः, मरहट्टेति महाराष्ट्राः, पाठान्तरे मट्टा मुष्टिकाः, आरवाः, डुंविलकाः, कुहुणाः, केकयाः, हूणा दोणा वा, रोमकाः, रुरवो, मरुकाः, चिलातीयाः, एते सर्वेऽपि अत्र सर्वत्र प्रथमा बहुवचनं ज्ञेयं। म्लेच्छविषयवासिनः म्लेच्छदेशजाः पापमतयः।

**जलयर–थलयर–सणप्फतोरग–खहचर–संडासतोंड–जीवोवग्घाय जीवीसण्णी य असण्णिणो पज्जत्ते अपज्जत्तेअ असुभलेस्सपरिणामे एते अण्णे य एवमादी करेंति पाणाइवायकरणं ॥**

जलचराश्च मत्स्यादयः, स्थलचराश्च चतुष्पदमनुष्यादयः, सनखपदाश्चसिंहादयः, उरगाः–सर्पाः, खचराः पक्षिणः, संदंसकाकारं तुंडं मुखं येषां ते संदंसतुण्डाः, जीवोपघातिनः सर्वत्रकर्मधारयः, संज्ञिनश्च असंज्ञिनश्च येषां दीर्घकालिकीः संज्ञा परिणतं मनस्ते-संज्ञिनस्तदितरेऽसंज्ञिनः, पर्याप्ताऽपर्याप्तलब्धिमन्तः, स्वाः स्वाः पर्याप्तीः अपूरयित्वा म्रियन्ते ते अपर्याप्ताः, अशुभाः–संक्लिष्टाध्यवसायाः परिणामा येषां ते अशुभलेश्यापरिणामाः, एते पूर्वोक्ताः, अन्ये–उक्तेभ्योऽपराः, एवमादयः कुर्वन्ति रचयन्ति प्राणवधानुष्ठानं।

**पावा पावाभिगमा पावमइ [पावरुई] पाणवहकयरती पाणवहरुवाणुट्ठाणा पाणवहकहासु अभिरमंता तुट्ठा पावं करेत्तु सुहोति य बहुप्पगारं ॥**

पापात्मानः, पापमेव अभिगमं उपादेयं येषां ते, पापमतयः पापमेव श्रद्धानाः, प्राणवधे कृता रुचिः अभिलाषो यैस्ते, प्राणवधरूपानुष्ठानाः तदेव आचरणं प्राणवधकथासु अभिरमन्तः–चित्तं ददन्तः, तुष्टाः–पापकर्मण्येव बद्धादराः, पापं प्राणवधरूपं कृतं कारितं

ना दृष्ट्वा सुखमिति मन्यमानाः, वहुप्रकारं-घातरूपं करण-कारापणे तुष्टिवन्तः, ये प्राणवधं कुर्वन्ति ते प्रतिपादिताः ॥

इदानीं यादृशं फलं प्राणिवधो ददाति एतदुच्यते—

तस्स य पावस्स फलविवागं अयाणमाणा वड्ढंति महब्भयं अविस्सामवेयणं दीहकालबहुदुक्खसंकडं नरय-तिरिक्खजोणिं, इओ आउक्खए चुया असुभकम्मबहुला उववज्जंति नरएसु हुलियं महालएसु वयरामय-कुड्ड-रुद्द-निस्संधि-दारविरहिय-निम्मद्दव-भूमितल-खरामरिस--विसमणिरयघरचारएसुं महोसिण-सया-पतत्त-दुग्गंध-विस्स-उव्वेयजणगेसु बीभच्छदरिसणिज्जेसु य निच्चं हिमपडलसीयलेसु कालोभासेसु य भीम-गंभीरलोमहरिसणेसु णिरभिरामेसु निप्पडियारवाहिरोगजरापीलिएसु अतीव निच्चंधयारतिमिस्सेसु पतिभएसु ववगयगह--चंद-सूर-णक्खत्त--जोइसेसु मेय--वसा--मंसपडल--पोचड-पूय--रुहिरुक्किण्ण--विलीण---चिक्कण--रसिया वावण्णकुहियचिक्खल्लकद्दमेसु कुकूलानल--पलित्तजालमुम्मुर असिक्खुरकरवत्तधारासु निसियविच्छु-यडंकनिवातोवम-फरिसअतिदुस्सहेसु य अत्ताणा असरणा कडुयदुक्खपरितावणेसु अणुबद्धनिरंतरवेयणेसु जमपुरिससंकुलेसु ॥

तस्य पापस्य-प्राणिवधरूपस्य फलविपाकं वृक्षस्य साध्यं फलमिव विपाकः कर्मणामुदयः तं फलविपाकं अजानन्तः वृद्धिं नयन्ति-वर्द्धयन्ति नरकतिर्यग्योनिमिति योगः, तद्वृद्धिश्च पुनः पुनस्तत्रोत्पादहेतुकर्मवन्धनात्, अतः कारणात् महद्भयं, अविश्रामवेदनां-विश्रान्तरहिताऽसातवेदनां दीर्घकालं यावत् वहुभिर्दुःखैः शारीरमानसैर्या संकटा-संकुला यासां

तां, नरकेषु तिर्यक्षु च योनिः उत्पत्तित्वात् तां, आयुःक्षये च्युताः इतो मृताः सन्तः, अशुभकर्मबहुलाः, उत्पद्यन्ते, नरकेषु तिर्यक्षु हुलियं ति शीघ्रं क्षेत्रवृत्तिभ्यां महत्सु महालयेषु, वज्रमयकुण्ड्या, रुन्दायां विस्तीर्णायां, निस्संधयो निर्विवराश्च, द्वारविरहिताः–अद्वारकाः, निर्मार्दवभूमितलाश्च–कर्कशभूमयो ये नरकास्ते तथा खरामर्शाः कर्कशस्पर्शा विषमोन्नताः, नरकगृहसम्बन्धिनो ये चारकाः कुड्यकुटा नारकोत्पत्तिस्थानभूता येषु नरकेषु तथा अतस्तेषु, तथा महोष्णाः–अत्युष्णाः, सदा प्रतप्ता नित्यतापा, दुर्गन्धा अशुभगन्धा विश्रा–आमगन्धयः कुथिता इत्यर्थः, उद्विज्यते येषु उद्विग्नीभूयते ते उद्वेगाः उद्वेगकारिणः, बीभत्सरौद्रदर्शनीया येषु ते, नित्यं, हिमं–शीतं तस्य पटलं–समुहस्ततोऽप्यधिकं शीतला येषु तेषु नरकेषु, कालः–श्यामः अवभासः–प्रभा येषु ते, भयंकराः, गंभीराः–अस्ताधाः तत एव लोमहर्षिणो भयकृद्रोमाञ्चजनका ये ते, निरभिरामेषु–अरमणीयेषु, निःप्रतिकारा अचिकित्स्या ये व्याधयः कुष्ठाद्याः रोगाः–सद्यो जीवघातिनः जरा–वयोहानि तथा ज्वराः शूलादयः तैः पीडिता ये ते, इदं च नारकधर्माध्यारोपान्नारकधर्माणां विशेषणमुक्तं, अतीव नित्यान्धकारेण तिमिश्रानिचया येषु तेषु अतएव, प्रतिभयं सर्वप्राणिनां भयं येषु तेषु, व्यपगता–नष्टा ग्रहचन्द्रसूर्यनक्षत्रज्योतिष्केषु अत्र ज्योतिःशब्देन तारका गृह्यन्ते तेषु, मेदश्च शारीरधातुविशेषः वसा च शारीरस्नेहः मंसं–पिशितं तेषां यत्पटलं–वृन्दं पोच्चडंति अनिविडं पूयरुधिराभ्यां–पक्वरक्तशोणिताभ्यां उत्कीर्णे–मिश्रितं विलीनं जुगुप्सितं–चिक्कणं आश्लेषवत्‍रसिकं, व्यापन्नं–विनष्टं कुथितं–शटितं चिक्खल्लमलिनत्वेन लपलपायमानः कर्दमो येषु तेषु, कुकूलानलः–कारीषाग्निः प्रदीप्ताऽऽतप्तमाना या ज्वाला मुर्म्मुरः स्फुलिङ्गनिर्धूमाग्निकणिका भस्माग्निः, असिक्षुरकरपत्राणां धारा येषु ते, निशितास्तीक्ष्णाः वृश्चिकदंशस्य विनिर्गतेन–विनिपातेन एभिः उपमीयन्ते इति तादृशः स्पर्शो अत्यन्तं दुःखेन सह्यन्ते ये ते तेषु नरकेषु, अत्राणाः, अशरणाः, कटुकदुःख-

परितापनास्तेषु अनुबद्धाः क्रोधवशेन अत्यन्तं निरन्तरं वेदना येषु तेषु, तथा यमस्य दक्षिणदिग्पालस्य ये पुरुषा अम्बादयोऽ-सुरविशेषा यमपुरुषास्तैः संकुला ये तेषु ॥

तत्थ य अन्तोमुहुत्तलद्धिभवपच्चएणं निव्वत्तेंति उ ते सरीरं हुंडं बीभच्छदरिसणिज्जं बीहणगं अट्ठिण्हा-रुणहरोमवज्जियं असुभगं दुक्खविसहं, तत्तो य पज्जत्तिमुवगया इंदिएहिं पंचहिं वेदेंति वेदणं असुहाए वेयणाए उज्जलयलविउल--कक्खड-खरफरुसपयंडा घोर-बीहणगदारुणाए, किं ते ? ॥

तत्र च उत्पत्तौ सत्यां अन्तर्मुहूर्त्तस्य लब्धिर्वैक्रियलब्धिः भवप्रत्ययश्च भवलक्षणहेतुश्च, तेन कालप्रमाणमात्रेण निवर्त्तयन्ति कुर्वन्ति ते पापाः, पुनः शरीरं-बोंदी, हुंडं सर्वत्राऽलक्षणमयस्थिति अशुभं, बीभत्सदर्शनीयं दुर्दर्शनकं, भयजनकं, अस्थि-स्नायु-नख-रोमवर्जितं अशुभगंधं च, दुःखविषहं पाठान्तरेण अशुभं दुःखविषहं यत्तत्तथा तत्, ततः शरीरनिवर्त्तनाऽनन्तरं पर्याप्तमिन्द्रिय-पर्याप्तिमानप्राणभाषामनःपर्याप्तिमुपगताः एतावता पञ्चेन्द्रियषट्पर्याप्तिभिः अष्टसमयमुहूर्त्तमानेन मुहूर्त्तमुहूर्त्तानन्तरं पर्याप्तिसम्पूर्णं स्यात्, पर्याप्तं पृथग् पृथग् परिमाणेन न तु देववत् भाषामनसोरैक्यकालमिति दर्शितम् , पञ्चेन्द्रियैर्वेदयन्ति किं ? दुःखं कटु अशुभया वेदनया महाकुंभीपचनादीनि दुःखकारणानीति योगः, कीदृशी वेदना उज्ज्वला लेशमात्रमप्युना न बलवती-निवर्त्तयितुमशक्या विपुला-सर्वशरीरव्यापिनी कर्कशस्पर्शेन प्रचण्डा जीवितक्षयकारिणी भयोत्पादकाः रुद्रा-भयोत्पादकाः दारुणा-भीषणाः वेदनाः वेदयन्ति, किं तेति तद्यथा—



कंदुमहाकुंभिए पयण-पउलण-तवग-तलण-भट्ठभज्जणाणि य लोहकडाहुकड्ढणाणि य कोट्टबलिकरणकोट्ट-

णाणि य सामलितिक्खग्ग- लोहकंटक- अभिसरणापसारणाणि फालणविदारणाणि य अवकोडकबंधणाणि लट्ठिसयतालणाणि य गलगंबलुल्लंबणाणि सूलग्गभेयणाणि य आएसपवंचणाणि खिंसणविमाणणाणि विघुट्ठपणिज्जणाणि वज्झसयमातिकाति य एवं ते ॥

कुंदु-लोही महाकुंभी महती उखा तयोर्मध्ये, पचनं भक्तस्येव रन्धनं, पृथुक धान्यविशेषस्य, तपक-तापिकालोहमयभाजनं तत्र यत् तलनं तैलादिना, तथा भर्जनं अंगारादिभिः, लोहकटाहस्य क्काथनानि इक्षुरसस्येव उत्कालितं, कुट्टंति क्रीडाकरणेन, बलात्कारेण कोट्टः प्राकारस्तद्वत् बलिकरणं कोट्टनं कुटिलकरणं चूर्णनं तानि, शाल्मलिवृक्षविशेषस्तस्य तीक्ष्णाग्रा ये लोहकण्टका इव कण्टकाः तेषु अभिसरणं-गमनं अपसरणं च निवर्त्तनं, स्फाटनं-पाटनं त्वचः, विदारणं क्रकचादिभिः, विविधप्रकारैर्बन्धनं-अवकोट्टबंधनं वृक्षशाखादौ बन्धनं उद्बन्धनं तानि गलकंबलोल्लुठनानि शूलाग्रभेदनानि लष्टिशतैरिति शेषः, ताडनं कशादिभिः गलाग्रछेदनादीनि, शूलाग्रभेदनानि-शूलाप्रोतादीनि, आदेशप्रपंचनानि-असत् अर्थादेशतो विप्रतारणानि, अपमानतः खिंसनानि, निन्दनीयत्वात् विमाननानि व्युत्कृष्टं स्वकृतपापफलं प्राप्नोतु इत्यादि वाग्भिः संशब्दितानां आकारितानां, वध्यगाढभूमिदुःखप्रापणानि वध्याश्रितदुःखानीत्यर्थः एवं इति उक्तक्रमेण ते पापकर्मकारिणः ॥

पुव्वकम्मकयसंचओतत्ता निरयग्गिमहग्गिसंपलित्ता गाढदुक्खमहब्भयं कक्कसं असायं सारीरं माणसं च तिव्वं दुविहं वेदेंति वेयणं पावकम्मकारी । बहूणि पलिओवमसागरोवमाणि कलुणं पालेन्ति ते अहाउयं जम-

१ [ तावडो इति भाषा ]

कातिग्यतासिया य सद्दं करेंति भीया, किं ते ?, ॥

पूर्वोक्तकर्मणां सम्बन्धेन उपेतां प्राप्तांगदुःखरूपां एतादृशीं वेदनां वेदयन्तीति योगः। तप्तां नरकाग्निमहाग्निवज्राग्निवत् समदीप्तां, गाढ-तीव्रतरदुःखैर्महत्भयं यस्यां सा तां, कर्कशां कठिनद्रव्योपनिपातोत्पत्तित्वात्, असातां आसातावेदनीयकर्मप्रभवां, शरीरमानसां च तीव्रानुभागजनितां द्विविधां वेदनां वेदयन्ति पापकर्मकारिणः॥ तथा बहूनि पल्योपमसागरोपमाणि यावत् करुणा दयास्पदीभूताः करुणां पालयन्ति। ते पूर्वोक्ताः पापकर्मकारिणः यथा बद्ध्यमानायुष्कं गाढयाऽपि वेदनया उपक्रमते। तथा यमकायिकैर्दक्षिणदिक्पालदेवनिकायाऽऽश्रितैरसुरैरम्बादिभिरित्यर्थः, त्रासिताः उत्पादितभया तत एव आर्त्तस्वरं कुर्वन्ति अतो भीताः भयं प्राप्ताः। यतः ते किं कुर्वन्ति इत्याह—

**अविभाय सामि भाय बप्प ताय जितवं मुय मे मरामि दुब्बलो वाहिपीलिओऽहं किं इदाणिऽसि? एवं दारुणो णिद्दओय मा देहि मे पहारे उस्सासेतं (एयं) मुहुत्तं मे देहि पसायं करेह मा रुस वीसमामि गेविज्जं मुयह मे मरामि, गाढं तण्हाइओ अहं देहि पाणीयं—**

अविभाव्य तेषां स्वरूपं स्वामित्वे इति वदन्ति—हे स्वामिन्! हे भ्रातः! हे बप्प! हेपितः! हे तात—हे जनक! हे जितवान्—हे प्राप्तजय! वा—अथवा, जीवन्तं मां मुञ्च वा मरामि—म्रिये अहं, 'अत्र एक वचनं दीनापेक्षया' यतः अहं दुर्बलो व्याधिपीडितः। किं इदानीं असि—भवसि? त्वं इति तैरुक्तः एवंप्रकारो दारुणो—रौद्रः निर्दयो—निष्करुणोः मा देहि मम प्रहारान्, [1]उत्स्वासनिश्वासाश्वासनालक्षणो अन्तर्मुहूर्त्तं मे देहि॥ प्रासादं प्रसन्नतां कुरु, मा रूष्य—क्रुद्ध्यस्व, विश्रामं करोमि, ग्रैवेयकं—

१ 'लोकभाषायां थोडीवार सास खावा दे'

ग्रीवाबन्धनं मुञ्च, मे-मम यतो मरामि अहं। गाढं-अत्यर्थं तृष्णार्दितो-तृष्णापीडितोऽहं, देहि मे पानीयं जलं इति नारकेण उक्ते सति नरकपाला यद्भणन्ति तदाह—

**ता हं तंपि य इमं जलं विमलं सीयलंति घेत्तूण य नरयपाला तवियं तउयं से दिंति कलसेण अंजलीसु दट्ठूण य तं पवेवियंगोवंगा अंसुपगलंतपप्पुतच्छा छिण्णा तण्हाइयम्ह कलुणाणि जंपमाणा विप्पेक्खन्ता दिसोदिसिं अत्ताणा असरणा अणाहा अबंधवा बंधुविप्पहीणा विपलायंति य मियविव वेगेण भओव्विग्गा, घेत्तूण बला पलायमाणाणं निरणुकंपा मुहं विहाडेत्तुं लोहदंडेहिं कलकलं ण्हं वयणंसि छुभंति केइ जमकाइया हसंता ॥**

यतस्त्वं पिपासितस्ततोऽहं देहि चाऽऽमन्त्रणे पिब इमं जलं विमलं-निर्मलं शीतलं इति भणित्वा गृहीत्वा नरकपालाः तापितं-तप्तं त्रपुं-कांश्यं सीसकं च तस्य-नारकस्य ददति। कलशेन-पृथुबुध्नोदराद्याकारवता घटेन, अञ्जलिषु-प्रसृतिषु, तज्जलं दृष्ट्वा वेपिताङ्गाः-कम्पितसकलगात्राः, अश्रुभिः प्रगलद्भिः प्रप्लुते-प्लाविते अक्षिणी येषां ते अश्रुप्रगलत् प्रप्लुताक्षाः, छिन्ना तृष्णा अस्माकमित्येवं रूपाणि वचनानि करुणानि-दीनानि जल्पमाना अपि पलायन्ते दिशोदिशं इति योगः, विप्रेक्षमाणा दिशोदिशः एकस्याः दिशः सकाशादन्यां दिशमिति । अत्राणाः-अरक्षकाः, अशरणा-अगृहा अर्थकारकरहिताः, अनाथाः अस्वामिकाः, अबान्धवा अभ्रातृकाः विद्यमानबन्धववियुक्ताः कथंचित् एकार्थिकान्यपि पदानि न दोषाय, विपलायन्ते-नश्यन्ति । कथं मृगा इव वेगेन भयोद्विग्ना इति, गृहीत्वा च बलात्-हठात् नारकान् इति शेषः, तेषां च विपलायमानानां, निरनुकम्पाः यमकायिकेति-योगः। मुखं विघाट्य-विदार्य लोहदंडैः कलकलशब्दयोगात् कलकलंतं पूर्वोक्तं त्रपुकं इह स्मर्यते णंति वाक्यालंकारे वदने-

मुखे प्रक्षिपन्ति ॥ के इत्याह ? केचित् यमकायिका अम्बादयः, किंभूताः ? हसन्तः इति ॥ ततो नारका यत् कुर्वन्ति तदाह–

तेण दड्ढा संतो रसंति य भीमाइं विस्सराइं रुवंति य कलुणगाइं पारेवयगा इव एवं पलवित–विलाव–कलुणाकंदिय–बहुरुन्नरुदियसद्दो परिदेवियरुद्धयद्धयनारकारवसंकुलो णीसिट्ठो ॥

तेन त्रपुत्रपुणा दग्धाः सन्तः रसन्ति–प्रलपन्ति च वचनानि किंभूतानि ? भीमानि–भयंकराणि, विस्वराणि विकृतशब्दानि । रुदन्ति च पुनः करुणकानि करुणोत्पादकानि, के इव पारापता इव इति एवं प्रकारो निर्घोषः श्रूयते इति योगः । प्रलपितमनर्थभाषणं, विलापः–आर्त्तस्वरकरणं ताभ्यां करुणो दीनो यः सः क्रन्दितं ध्वनिविशेषकरणं बहु–प्रभूतं यथा भवति तथा रुन्नं शून्यस्थानमिव रुदितं–अश्रुमोचनं आराटिमोचनं तेषां शब्दो यस्मिन् सः, परिदेविताः–विलापाः पाठान्तरे परिवेपिनो कम्पिताः अत एव रुद्धा बद्धाश्च ये ते नारकाः ते तथा तेषां य आरवः शब्दः तेन यः सङ्कुलस्स तथा, निसृष्टो–मुक्तो नारकैः शब्दः–तथा ॥

रसिय–भणिय–कुविय–उक्कूइय–निरयपालतज्जियं गेण्ह क्कम पहर छिंद भिंद उप्पाडेहुक्खणाहि कत्ताहि विकत्ताहि य भुज्जो हण विहण विच्छुभोच्छुब्भ आकड्ढ विकड्ढ किं ण जंपसि ? सराहि पावकम्माइं कियाइं दुक्कयाइं एवं वयणमहप्पगब्भो संपडिसुयासद्दसंकुलो उत्तासओ सया निरयगोयराण महाणगरडज्झमाणसरिसो निग्घोसो सुव्वए अणिट्ठो तहियं नेरइयाणं जाइज्जंताणं जायणाहिं ॥

रसिताः- शब्दिताः, भणिताः विहितव्यक्तवचनाः, कुपिताः, उत्कूजिताः कृतमहाध्वनयः, ये निरयपालाः तेषां यत्तर्जितं अरे ! पाप ! नारक ! ज्ञास्यसि अद्य किं जायते इत्यादि भणितं नारकविषयं गृहाणाऽमुं नारकं, क्रम, लंघय, प्रहर लकुटादिना,

छिंद खड्गादिना, भिन्द कुन्तादिना, उत्पाटय भूतलात्, उत्खनय अक्षिगोलक-बाह्वादिकं, कृंत कर्त्तय नासादिकं, विकृन्त विविधैः प्रकारैः, भूय एकवारहतं पुनरपि पाठान्तरे भञ्ज आमर्दय, हन ताडय यत्क्रियार्थो हनशब्दो निपातः, विहन विशेषेण ताडय, विक्षिप विशेषेणमुत्क्षेप, मुखे विकीर्णं वा कुरु, वाचनान्तरे निष्कालय, उच्छुभ आधिक्येन क्षिप, प्रवेशय इत्यर्थः, आकृष अभिमुखं उत्कर्षणं कुरु, विकृष विपरीतकर्षणं कुरु, किं न जल्पसि वाचनान्तरे न जानासीत्यर्थः॥ स्मर हे नारक! पापकर्माणि कृतानि एवं अमुना प्रकारेण यद्वचनं नरकपालप्रतिपादनं ते महाप्रगल्भोऽतिघृष्टः स्फारो यस्य सः, तथा प्रतिश्रुतः प्रतिशब्दः तद्रूपो यः शब्दस्तेन सङ्कुलो-व्याप्तः, उत्त्रासनकः प्रतिभय इति एकार्थः । सदा सर्वदा केषां त्रासक इत्यर्थः निरयगोचराणां नरकवर्त्तिनां महानगरदह्यमानघोषसदृशो निर्घोषमहाध्वनिः श्रूयते । अनिष्टः तत्र नरके केषां सम्बन्धीत्याह-नारकाणां किंभूतानां यात्यमानानां-कदर्थ्यमानानां कदर्थनाप्रकारैः, किं तेत्ति कास्ताः-

किं ते ?, असिवण-दब्भवण-जंतपत्थर-सूइतल-क्खारवावि-कलकलंतवेयरणि-कलंबवालुया-जलिय-गुहनिरुंभणं उसिणोसिण-कंटइल्ल-दुग्गमरहजोयण-तत्तलोहमग्ग [ पह ] गमण-वाहणाणि इमेहिं विविहेहिं आयुहेहिं ॥

असिवनं-खड्गाकारपत्रवनं, दर्भवनं प्रतीतं, यन्त्रप्रस्तराः-घरट्टादिपाषाणाः, शूचीतलं-उर्ध्वमुखं, क्षारवाप्यः-क्षारद्रव्यभृतवाप्यः कलकलायमानं यत्त्रपुकादि तद्भृता या वैतरण्यभिधाना नदी, कदम्बपुष्पाकारवालुका ज्वलिता या कन्दरा-गुहास्तासु ततोऽसिवनादिषु यन्निरोधनं, उष्णोष्णे कण्टकाकीर्णे दुर्गमेकृच्छ्रगमने रथे यत् योजनं, तप्तलोहमार्गे यत् गमनं स्वयमेव वाहनं परैः गवामिव

तत्तथा, एभिः-वक्ष्यमाणैः, विविधैः प्रकारैः आयुधैः परस्परवेदनामुदीरयन्तीति योगः

किं ते मुग्गरमुसुंढि-करकय-सत्ति-हल-गय-मुसल-चक्क-कोंत-तोमर-सूल-लउल-भिंडिमाल-सब(द्ध)ल-पट्टिस-चम्मेट्ठ-दुहण-मुट्ठिय-असि-खेडग-खग्ग-चाव-नाराय-कणक-कप्पिणि-वासि-परसु-कंटक-निक्ख-निम्मल-अण्णेहि य एवमादिएहिं असुभेहिं वेउव्विएहिं पहरणसतेहिं अणुबद्धतिव्ववेरा परोप्परं वेयणं उदीरंति अभिहणंता, ॥

किं ते त्ति ? तद्यथा-कैः कैः मुद्गरो-अयोधनः मुसण्ढिः-प्रहरणविशेषः, क्रकचं-करपत्रं, शक्तिः-त्रिशूलं, हलं-लांगलं, गदा-लकुटविशेषः, मुशलं, चक्रं, कुन्तं प्रतीतं, तोमरः बाणविशेषः, शूलं, लकुटो-यष्टिः नालिका, भिण्डिम्मलः-प्रहरणविशेषः, सद्बलोल्ल, पट्टिशः-प्रहरणविशेषः चर्मवेष्टितप्रस्तर प्रहरणविशेषः द्रुघणो घणः मुद्गरविशेषो मौष्टिकप्रमाणः, असिः-खड्गः, [1]खेटकः-फलकं, [2]खड्गं, [3]चापं धनुः, नाराचो-बाणः, कणको-बाणविशेषः [1]कप्पणी-कर्त्तरिका [2]वासीः-काष्ठतक्षोपकरणं [4]परशुः कुठारः, कण्टका भल्ला, [1]तीक्ष्णा [2]निर्मला अन्यैः-बहुभिरनुक्तैः, इत्यादिप्रकारैः, अशुभैः-पापनिदानभूतैः, वैक्रियैः-विविधविकारकारकैः नवीननिष्पादितैः कृत्रिमाऽकृत्रिमशस्त्रविशेषैः, अविच्छिन्नतीव्रतरवैरभावाः परस्परं-अन्योऽन्यं वेदनां-पीडां व्यथां उदीयन्ति-प्रकटीकुर्वन्ति अभिहन्यमाना घ्नन्तः।

१ 'कटारी' भाषा. २ 'ढाल' भाषा. ३ 'तरवार' भाषा. १ नलीओ तीर भाषा. २ 'कातीरी' भाषा. ३ 'वांसलो' भाषा. ४ कुहाडो भाषा. १ अणिआला भाषा २ धराला भाषा

तत्थ य मोग्गर–पहारचुण्णिय–मुसुंढिसंभग्गमहितदेहा जंतोवपीलणफुरंतकप्पिया के इत्थ सचम्मका विगत्ता णिम्मूलुल्लूणयकण्णोट्ठणासिका छिण्णहत्थपादा ॥ तत्थ य

तत्र–नरके मुद्गरप्रहारचूर्णितः, मुसण्ढिभिः भग्नो जर्जरीकृतो मथितो विलोडितो दधिवत् देहो–गात्रं येषां ते तथा, यन्त्रोपपीडनेन स्फुरन्तः कल्पिताः–छिन्नाः छेदिताः खण्डीकृताः केचित् नारका–अत्र नरके, सचर्मणा सह विकृताः–उत्कृताः पृथग्कृतचर्माणः, तथा निर्मूलं उल्लूनाः छेदिताः कर्णोष्ठनासिकाः, छिन्नहस्तपादाः तत्र च।

असि–करकय–तिक्खकोंत–परसुप्पहार–फालियवासीसंतच्छितंगमंगा कलकलमाणखारपरिसित्त–गाढडज्झंतगत्त–कुंतग्गभिण्ण–जज्जरियसव्वदेहा विलोलंति महीतले विसूणियंगमंगा, ॥

असि–क्रकच–तीक्ष्णकुन्त–परशूनां प्रहारैः स्फुटिता विदारिता ये ते, तथा वास्या–काष्ठतक्षोपकरणेन संतक्षितानि च्छोल्लितानि अङ्गानि येषां ते, पुनः कीदृशा ? अग्निना कलकलायमानक्षारेण यत् परिषिक्तं सिञ्चितं तेन गाढं अत्यर्थं दह्यमानं गात्रं येषां ते, तथा कुन्ता–भल्लास्तेषां अग्राणि प्रान्तानि तैर्भिन्नं–भेदितं पूर्वं भेदितं पश्चात् जर्जरितं कुटुम्बरिवत् चूर्णितः सर्वः–समस्तो देहो येषां ते, तथा विलुठितमहीतले पृथ्वीपीठे नारका इति शेषः ॥ पृथुकवत् विसूनितं भर्जितं अङ्गं येषां ते, तथा कुत्राऽपि 'निग्गय जीहा' पाठान्तरे निर्गतजिह्वा इति वाच्यं, तत्र महीतले ततः किं जातं तदाह—

विग–सुणग–सियाल–काक–मज्जार–सरभ–दीविय–वियग्घ–सद्दूल–सीहदप्पिय–खुहाभिभूतेहिं णिच्चकालमणसिएहिं घोरा रसमाणभीमरूवेहिं अक्कमित्ता दढदाढा–गाढडक्क–कड्ढिय–सुतिक्ख–नह–

फालियउद्धदेहा विच्छिप्पंते समंतओ विमुक्कसंधिबंधणावियंगमंगा कंक-कुरर-गिद्ध-घोरकट्ठवायसगणेहिं य पुणो खरथिरदढणक्ख-लोहतुंडेहिं ओवयित्ता पक्खाहय-तिक्खणक्खविकिन्न-जिब्भंछियनयणनिद्दओलुग्ग-विगतवयणा, उक्कोसंता य उप्पयंता निपतंता भमंता ॥

वृका-ईहामृगाः, शृगालाः-जम्बूकाः, श्वानः, काकाः द्विधाः, मार्जाराः-बिडालाः, सरभाः अष्टापदाः, द्विपिकाः-चित्रकाः, व्याघ्राः, शार्दूलाः-व्याघ्रापत्यानि, सिंहाः एते दृप्ताः दर्पिताः क्षुधाऽभिभूतैरेतैः-पूर्वोक्तैः नित्यकालं-सर्वदा अनशनैर्निर्भोजनैः अत्यन्तक्षुधितैः घोरा-दारुणक्रियाकारिणः आरसन्तः शब्दायमानाः भीमरूपाश्च ये ते तथाविधा तैराक्रम्य बध्वा, दृढदंष्ट्राभिः गाढमत्यर्थं दष्टाः कृष्टाश्च आकर्षिताः, सुतीक्ष्णनखैः स्फाटितो विदारित उर्ध्वदेहो येषां ते, विकीर्यन्ते सर्वतः विमुक्ताः श्लथीकृत-सन्धिबन्धना-अङ्गसन्धाना व्यङ्गितानि विकलीकृतानि अङ्गानि येषां ते, कङ्काः पक्षिविशेषाः, कुरराः समलाः, गृध्राः सींचनकाः, घोरकष्टाऽतिकष्टकारिणो ये वायसास्तेषां गणाः समुहास्तैः, पुनस्ते कीदृशाः ? खराः-कर्कशाः स्थिराः-निश्चलाः दृढा-अभंजनशीला नखा येषां ते तथा, लोहवत् तुण्डं-मुखं येषां ते तथा, तैः उपनिपत्य-आगत्य पक्षैः आहताः, तीक्ष्णनखैर्विक्षिप्ता-विदारिताः, आकृष्य जिह्वाः, अच्छित्ते-कर्षिते नयने लोचने येषां ते तथा, निर्दयं-निःकृपं यथा भवति तथा अवरुग्णं-विकृतं वदनं येषां ते, [पाठान्तरे अवलुत्तगत्ता-तत्र अवलुप्तानि छिन्नानि गात्राणि येषां ते], उत्क्रोशन्तः-क्रन्दन्तः, उत्पतन्तः आकाशे, निपतन्तो भूम्यां ॥

पुव्वकम्मोदयोवगता पच्छाणुसएण डज्झमाणा णिंदंता पुरेकडाइं कम्माइं पावगाइं तहिं तहिं तारिसाणि

१ भङ्गप्फयां कीधां भाया। २ वरगडा भाया

ओसण्णं चिक्कणाइं दुक्खाति अणुभवित्ता तत्तो य आउक्खएणं उव्वट्टिया समाणा बहवे गच्छंति, तिरियवसहिं दुक्खुत्तारं सुदारुणं जम्मणमरणजरावाहिपरियट्टणारहट्टं, जल–थल–खहचर–परोप्परविहिंसणपवंचं, इमं च जगपागडं वरागा दुक्खं पावेन्ति दीहकालं, किं ते ?,

पूर्वकर्मोदयोपगताः, 'सर्वत्र कर्मधारयः' पश्चात् अनुशयेन–पश्चात्तापेन दह्यमानाः, जुगुप्समानाः, पुरा–पूर्वभवे कृतानि–कर्माणि क्रियाः पापकानि प्राणातिपातादीनि पातकानि ततस्तस्यां रत्नप्रभायां उत्कृष्टस्थितौ तादृशानि जन्मान्तरोपार्जितानि परमाधार्मिकोदीरीतक्षेत्रप्रत्ययरूपाणि, ओसन्नं चिक्कणाइं प्राचुर्येण दुर्विमोचनानि दुःखानि अनुभूय ततश्च निरयात् आयुः–क्षयेण उद्वृत्ताः सन्तः बहवो गच्छन्ति, तिर्यग् वसतिं–तिर्यग् योनौ, यतोऽल्पा एव मनुष्येषूत्पद्यन्ते, दुःक्खोत्तारामिति कोऽर्थः? अनन्तोत्सर्प्पिण्यवसर्प्पिणीकायस्थितिकत्वात्तस्यां सुदारुणां दुक्खाश्रयत्वात्, जन्मजरामरणव्याधीनां याः परिवर्त्तनाः पुनः पुनर्भवनानि इति ताभिरर्घट्ट इव अर्घट्टो या सा तां तिर्यग्योनिं, जलचरस्थलचरखचराणां परस्परेण विहिंसनस्य विविधव्यापादनस्य प्रपञ्चो–विस्तारो यस्यां, तथा ते इदम् वक्ष्यमाणं प्रत्यक्षं प्रगटं जगत् न केवलं आगमगम्यं किन्तु जङ्गमजंतुनां प्रत्यक्ष–प्रमाण-प्रसिद्धतया प्रकटमेवेति, वराकास्तपस्विनः प्राणवधकारिण इति योगः दुक्खं, प्राप्नुवन्ति दीर्घ–चिरकालं किं तत् इति कथ्यमानं॥

सीउण्ह–तण्हा–खुह–वेयण–अप्पईकार–अडविजम्मण–णिच्चभउविग्गवास–जग्गण–वह-बंधण–ताडणंकण–निवायण–अट्ठिभंजण–नासाभेय–प्पहारदूमण–छविच्छेयण–अभिओगपावण –कसंकुसारनिवाय–दमणाणि वाहणाणि य॥

शीत-उष्ण-तृष्णा-क्षुधादिभिर्वेदना, अप्रतिकारं भिषग्जनकर्मादिरहितं वा सूतिकर्मप्रभृतिरहितं, अटव्यां जन्म-कान्तारे जननं नित्यं तत्रैव वासः भयेन उद्विग्नानां वासोऽवस्थानं, जागरणं-अनिद्रागमनं, वधो-मारणं, बन्धनं-संयमनं रज्वादिना, ताडनं-कुट्टनं, अङ्कनं-तप्तलोहशलाकादिना चिन्हकरणं, निपातनं-गर्त्तादौ क्षेपणं, अस्थिभञ्जनं-कीकसामर्दनं मुद्गरादिना, नासिकान्तर्विवरकरणं, नच्छविच्छेदनं-अवयवकर्त्तनं, प्रहारैर्दमनं उपतापः, अभियोगप्रापणं दग्धा बध्वा व्यापारवर्त्तनं, कसा चर्ममयी यष्टिः, अङ्कुशो वक्रशृणिः आरा-दण्डान्तरवर्त्तिलोहशलाका तासां निपातः शरीरविशनं, दमनं शिक्षाग्राहणं, वाहनं भारस्य एतानि प्राप्नुवन्ति इति योगः ।

**मायापितिविप्पयोग-सोयपरिपीलणाणि य, सत्थग्गिविसाभिघाय-गलगवलावलणमारणाणि य, गलजालुच्छिप्पणाणि य, पउलणविकप्पणाणि य, जावज्जीविगबंधणाणि य, पंजरनिरोहणाणि य, सयूहनिद्धाडणाणि य, धमणाणि य, दोहणाणि य, कुदंडगलबंधणाणि य, वाडगपरिवारणाणि य, पंकजलनिमज्जणाणि य, वारिप्पवेसणाणि भंगविसमणिवडणदवग्गिजालदहणाइ याइं य, ॥**

पुनः किदृसी वेदना ? मातापितृविप्रयोगः श्रोतसां नासामुखादि रन्ध्राणां परिपीडनानि रज्वादिद्रढबन्धनेन बाधनानि यानि तथा शोकपरिपीडनानि, तथा च शस्त्राग्निविषाश्च प्रतीताः तैः अभिघातो-हननं गलस्य-कण्ठस्य गवलस्य-शृङ्गस्य वालनं-मोडनं अथवा गलकंबलावलनेन मारणं तानि च, अथवा गलेन बडिशेन जालेन जलमध्यात् मत्स्यादीनां उत्क्षेपणानि-आकर्षणानि तानि, तथा-पउलणं-पचनं विकल्पनं-छेदनं प्रबलकर्त्तनानि तानि, यावज्जीविकबन्धनानि, पञ्जरबन्धनानि वा, स्वयूथात् निर्घाटनानि--निष्काशनानि, स्वकीयनिकायनिःकालनानीत्यर्थः, धमनानि महिष्यादीनां वायुपूरणानि, दोहनानि दुग्धानां, कुदण्डेन-बन्धन-

विशेषेण गले-कण्ठे यानि बन्धनानि, वाटकेन वृत्या परिवारणानि-निराकरणानि यानि च, तथा जातानि पंकनिमज्जनानि कर्दम प्रायःजले वोलनानि, वारिप्रवेशनानि-जलक्षेपाः तथा अवापातेसु गर्त्तापातेसु तथा उदक इत्येवंरूपेषु पतनेन निभङ्गो भञ्जनं गात्राणां अवपात निभङ्गः स च विषमात् पर्वतकण्टकादेर्निपतनं दवाग्निज्वालाभिर्दहनं च एतानि आदिर्येषां तानि एतादृशानि दुःखानि प्राप्नुवन्ति इति योगः ॥

**एवं ते दुक्खसयसंपलित्ता नरगाओ आगया इहं सावसेसकम्मा तिरिक्खपंचेंदिएसु पाविंति पावकारी कम्माणि, पमाय-राग-दोस-बहुसंचियाइं अतीव अस्सायकक्कसाइं ॥**

एवममुना प्रकारेण ते प्राणघातिनः दुःखशतसंप्रदीप्ताः-व्याकुलाः सन्तः नरकात् आगताः इह तिर्यग्लोके सावशेषकर्माणः तिर्यग् पञ्चेन्द्रियेषु प्राप्नुवन्ति । पापकारिणः कानि इत्याह-कर्माणि कर्मजन्यानि दुःखानीति भावः ।

प्रमादः पंचधा यथा-**मंज्जं विषय कसाया निद्दा विकहा** इति, तथाऽष्टधा प्रमादः यथा-**अन्नाण १ संसओ २ चेव मिच्छानाणं ३ तहेव य । रागो ४ दोसो ५ मइब्भंसो ६ धम्मंमि य अणायरो ७ ॥१॥ अप्पसत्थाण जोगाणं ८ पमाओ होइ अट्ठहा ॥** प्रमादः-शुभकर्मणि आलसता, रागः प्राप्ताऽप्राप्तेसु गृध्रतारूपः, द्वेषः प्राप्ताऽप्राप्तेषु असूयाजनितः, तैः प्रमादरागद्वेषैर्बहूनि यानि संचितानि उपार्जितानि तानि । अतीवाऽत्यर्थं असातेषु दुःखेषु मध्ये कर्कशानि-कठोराणि यानि तानि ।

**भमर-मसग-मच्छिमाइएसु य जाइकुलकोडिसयसहस्सेहिं नवहिं चउरिंदियाण तहिं तहिं चेव जम्मण-**

१ वाडी इति भाषा.

मरणाणि अणुहवंता कालं संखिज्जं भमंति नेरइयसमाणतिव्वदुक्खा फरिसरसणघाणचक्खुसहिया।

तथा भ्रमर-मशक-मक्षिकादिषु चतुरिन्द्रियाणां जातिषु नव कुलकोटिशतसहस्रेषु,-एवं घटनीयं शतसहस्रैर्लक्षः चतुरिन्द्रिय जातौ यानि कुलकोटिशतसहस्राणि तानि तेषु तथा च पुनः एव निश्चितं तत्रैव तत्रैव चतुरिन्द्रियजातौ इत्यर्थः, जन्ममरणानि अनुभवन्तः गमनागमनेन प्राप्नुवन्तः कियत्कालं यावत् इत्याह-संख्यातवर्षसहस्रलक्षणे भ्रमन्ति-पर्यटन्ति नारकसमानतीव्रदुःखाः स्पर्शनरसनघ्राण चक्षुःसहिता इन्द्रियचतुष्टयोपेताः चतुरिन्द्रिया इत्यर्थः।

तहेव तेंदिएसु कुंथु-पिप्पीलिया-अंधिकादिकेसु य जातिकुलकोडिसयसहस्सेहिं अट्ठहिं अणूणगेहिं तेंदियाण तहिं तहिं चेव जम्मणमरणाणि अणुहवंता कालं संखेज्जगं भमंति नेरइयसमाणतिव्वदुक्खा फरिसरसणघाणसंपउत्ता।

तथैवेति-यथा चतुरिन्द्रियेषु तथैव त्रीन्द्रियेषु यातनां-पीडां अनुभवन्त इत्येवाऽऽह कुन्थुः-क्षुद्रजन्तुः, पिपीलिका-कीटिका, घृतेलिकादयः प्रतीताः, अन्धिका-उपदेहिका, कर्णशृगाल्यादयः, इत्याद्यनेकेषु जातिषु अष्टकुलकोटिशतसहस्रेषु अष्टलक्षकुलकोटिष्वित्यर्थः, अन्यूनेषु संपूर्णेषु इत्यर्थः, एकमुक्तरीत्या त्रीन्द्रियेषु तस्यां जातौ जन्ममरणानि अनुभवन्तः कियत्कालं संख्यातवर्षसहस्र लक्षणं कायस्थित्या भ्रमन्ति नारकसमानतीव्रदुःखाः स्पर्शनरसनघ्राणसंप्रयुक्ताः मीलिताः।

गंडूलय-जलूय-किमिय-चंदणग-मादिएसु य जातीकुलकोडिसयसहस्सेहिं सत्तहिं अणूणएहिं बेइंदियाणि तहिं तहिं चेव जम्मणमरणाणि अणुहवंता कालं संखिज्जकं भमंति नेरइयसमाणतिव्वदुक्खा फरिसरसणसंपउत्ता।

गण्डूलयं-उदरजन्तुकृमयः तथा द्वीन्द्रियगमनमपि चतुरिन्द्रियवद् ज्ञेयं नवरं तदाऽऽह-जलूकाः, कृमयः क्षुद्रकीटाः, चन्दनकाः

अक्षाः इत्येवमादिषु द्वीन्द्रियजातिकुलकोटिसहस्रेषु अन्यूनैः-सम्पूर्णैः सप्तभिः द्वीन्द्रियस्थानानि तस्यां तस्यां जातौ च पुनः एवममुना प्रकारेण जन्ममरणानि अनुभवन्तः, कियत्कालं यावत् संख्यातकवर्षसहस्रं यावत् पर्यटन्ति, नारकसमानतीव्रदुःखाः स्पर्शनरसनसंप्रयुक्ता इन्द्रियद्वयोपेतास्तथैव ।

पत्ता एगिंदियत्तणंपि य पुढवि-जल-जलण-मारुय-वणप्फति सुहुमबायरं च पज्जत्तमपज्जत्तं पत्तेयसरीरणामसाहारणं च पत्तेयसरीरजीवेसु य तत्थवि कालमसंखेज्जं भमंति अणंतकालं च अणंतकाए, फासिंदियभावसंपउत्ता दुक्खसमुदयं इमं अणिट्ठं पावंति पुणो पुणो तहिं तहिं चेव परभवतरुगणगहणे ॥

न केवलं ते पञ्चेन्द्रियद्वीन्द्रियत्वं प्राप्ता किन्तु एकेन्द्रियत्वं प्राप्ता अपि तदाऽऽह-पृथवी-जल-ज्वलन-मारुत-वनस्पतीनां सम्बन्धि यत् एकेन्द्रियत्वं तत् कीदृशं ? सूक्ष्मनामकर्मोदयात् सूक्ष्मत्वं, बादरनामकर्मोदयात् बादरत्वं, पर्याप्तनामकर्मोदयात् पर्याप्तं, अपर्याप्तनामकर्मोदयात् अपर्याप्तं, प्रत्येकशरीरनामकर्मोदयात् प्रत्येकं, साधारणशरीरनामकर्मोदयात् साधारणं, चकारः समुच्चये, एवंविधं चैकेन्द्रियत्वं प्राप्ता जीवास्तेषु तत्र कियन्तं कालं कायस्थित्यां तिष्ठन्तीत्याह-तत्राऽसंख्यातकालं यावत् प्रत्येकशरीरेषु भ्रमन्ति-पर्यटन्ति, सर्वासां जातीनां कुलकोटयस्ताश्चेमाः—

एगिंदिएसु पंचसु, बारस सत्त तिग सत्त अट्ठवीसा य। विगलेसु सत्त अड नव, जल खह चउप्पय उरग भूयगे॥
अद्धतेरस बारस, दस दस नवगं नरामरे नरए। बारस छव्वीस पणवीस, हुंति कुलकोडी लक्खाइं ॥२॥ इति असंखोसप्पिणी उस्सप्पिणीओ, एगिंदियाण य चउण्हं । ता चेवओ अणंता वणस्सइए उ बोधव्वा ॥

साधारणशरीरेषु—अनन्तकाये अनन्तकालं पर्यटन्ति । स्पर्शनेन्द्रियभावं प्राप्ताः सन्तस्तत्र दुःखसमुदयं दुःखौघं इमं वक्ष्यमाणं प्राप्नुवन्तीति योगः । अनिष्टं—इच्छाप्रतिकूलं पुनः पुनस्तत्रैवैकेन्द्रियत्वे इत्यर्थः, किंभूते ? परः—प्रकृष्टः सर्वोत्कृष्टकायस्थितिकत्वात् परभवोत्पत्तिस्थानं तरुगणैर्गहनं दुःखगाहं यत्र तत् पाठान्तरे तरुग्रहणं गुणे वृक्षगुच्छगुल्मादिवृन्दं समूहो यत्र एकेन्द्रियत्वे दुःखसमुदयमेवाऽऽह—

कोद्दाल–कुलिय–दालण––सलिल––मलण–खुंभण––रुंभण––अणलाणिल–विविहसत्थघट्टण–परोप्पराभिहणण–मारण–विराहणाणि य अकामकाइ परप्पओगोदीरणाहि य कज्जपओयणेहि य पेस्सपसुनिमित्त–ओसहाहारमाइएहिं उक्खणण–उक्कत्थण–पयण–कोट्टण–पीसण–पिट्टण–भज्जण–गालण–आमोडण–सडण–फुडण–भंजण–छेयण–तच्छण–विलुंचण–पत्तज्झोडण–अग्गिदहणाइयाति, ।

कुद्दालो—लोहमयभूखनित्रं, कुलिकं—हलं, दालणं विदारणं, सलिलस्याऽपि भूशस्त्रं मलनं मर्दनं, क्षोभणं—सञ्चलनं, रुम्भणं—निरोधनं, अग्निवायुप्रमुखविविधशस्त्रैः स्वकायपरकायभेदभिन्नैर्यत् घट्टनं—संघट्टनं अनेन च परस्परं सर्वेषां दुःखमुक्तं परस्परं अभिहननं-मारणं—हननं, विराधनं—विविधभेदः पीडोत्पादनं, तानि कीदृशानि ?

अकामकानि—अनभिलषणीयानि, परप्रयोगेन उदीरणाभिः—स्वव्यतिरिक्तजनदुःखोत्पादनाभिः निःप्रयोजनैः कार्याऽर्थाऽनर्थादिभिः किमर्थं हन्यन्ते ? इत्याह—

प्रेष्यकर्मकरपशुगवादिनिमित्तं च यानि औषधाहारादीनि तैः कृत्वा तदर्थं वा, उत्खननं—उत्पाटनं, उत्क्वथनं त्वचाऽपनयनं, पचनं—पाककरणं, कुट्टनं चूर्णनं, प्रेषणं घरट्टादिना दलनं, पिट्टनं—ताडनं, भर्जनं—भ्राष्ट्रपचनं, गालनं—छालनं, आमोटनं—इषद्भञ्जनं,

शटनं-स्वत एव विगडनं, स्फोटनं स्वत एव द्विधा भवनं, भञ्जनं--आमर्दनं, छेदनं--द्विधा करणं, तक्षणं काष्ठादेरिव वास्यादिना विलुंचनं लोमाद्यपनयनं, पत्रज्झोडनं तरुमान्तपल्लवफलादिपातनं, अग्निदहनादीनि तथा तैः कृत्वा दुःखान्येकेन्द्रियाणां भवतीति योगः। एकेन्द्रियाणां अधिकारं निगमयन्नाह—

एवं ते भवपरंपरादुक्खसमणुबद्धा अडंति संसारबीहणकरे जीवा पाणाइवायनिरया अणंतकालं जे विय इह माणुसत्तणं आगया कहिं वि नरगा उव्वट्टिया अधन्ना तेविय दीसंति पायसो विकयविगलरूवा खुज्जा वडभा य वामणा य बहिरा काणा कुंटा पंगुला विगला य मूका य मंमणा य अंधयगा एगचक्खू विणिहयसंचिल्लया वाहि-रोगपीलिय-अप्पाउय-सत्थवज्झबाला कुलक्खणुक्किन्नदेहा दुब्बल-कुसंघयण-कुप्पमाण-कुसंठिया कुरूवा किविणा य हीणा हीणसत्ता निच्चंसोक्खपरिवज्जिया असुहदुक्खभागी णरगाओ इहं सावसेसकम्मा उवट्टा समाणा ॥

एवमुक्तक्रमेण नैकेन्द्रियाणां भवपरम्परासुखदुःखं तत् समनुबद्धमवच्छिन्नं येषां ते तथा अटन्ति संसारे बीहनकरे--भयङ्करे ये जीवाः प्राणातिपातनिरताः अनन्तकालं यावत् प्राणविनाशकारिणः नरकादुद्धृत्ताः इह मनुष्यगतिगता यादृशा भवन्ति तादृशा उच्यन्ते।

येऽपि च इह मर्त्यलोके मनुष्यत्वमागताः कथञ्चिन्महता कष्टेन नरकादुद्धृताः तेऽप्यधन्या दृश्यन्ते, प्रायसो ग्रहणेन तीर्थ-करादिभिर्व्यभिचारपरिहारार्थं विकृतविकलरूपत्वमेव प्रपञ्चयन्नाऽऽह—

कुब्जाः--वक्रजङ्घाः वटभाश्च--वक्र उपरि कायाः, वामना--अतिह्रस्वदेहाः, बधिराः कर्णेषु, काणा--दीपेकाणाः, कुंटाः विकृत-

---

१ दीवाकाणो इति लोकभाषा.

हस्ताः, पङ्गुलाः- पादहीनाः, विकलाः अपरिपूर्णदेहाः, मूका--वचनाऽसमर्थाः, कुत्रचित् अपि पुनः जलमूकाः जलप्रविष्टाश्च बुड बुड इत्येवंरूपेण ध्वनिर्येषां ते, मन्मनाः अस्फुटवचः, अन्धाः–चक्षुःरहिताः, एकाक्षाः सदीपचक्षुषः रोगाद्यैर्विनिहतचक्षुषः, संचिल्लकाः–निर्पटनेत्राः, व्याधिरोगपीडिताः–अथवा विशिष्ट आधिभिः पीडिताः, अल्पायुषः, शस्त्रेण वध्याः, बाला–अज्ञानिनः, कुत्सितलक्षणैरुत्कीर्णोदेहो येषां ते, दुर्बलाः कृशाः, कुसंहनना–बलविकला, अतिहस्वा अतिदीर्घाः, कुप्रमाणाः, कुत्सितसंस्थानाः, कुरूपाः, कृपणा कदर्यातुच्छप्रकृतयः, अल्पसत्त्वाः, नित्यसौख्यपरिवर्जिताः, अशुभाऽनुबन्धी यत् दुःखं तत् भजन्ति ते नरकात् उद्धृत्ताः सन्तः इह मनुष्यलोके दृश्यन्ते सावशेषकर्माणः यादृशं फलं ददाति तदाऽऽह—

एवं णरगं तिरिक्खजोणिं कुमाणुसत्तं च हिंडमाणा पावंति अणंताइं दुक्खाइं पावकारी एसो सो पाणवहस्स फलविवागो इहलोइओ पारलोइओ अप्पसुहो बहुदुक्खो महब्भयो बहुरयप्पगाढो दारुणो कक्कसो असाओ वाससहस्सेहिं मुच्चती, न य अवेदयित्ता अत्थि हु मोक्खोत्ति एवमाहंसु, नायकुलनंदणो महप्पा जिणो उ वीरवरनामधेज्जो कहइ पाणवहणस्स फलविवागं, एसो सो पाणवहो चंडो रुद्दो खुद्दो अणारिओ निग्घिणो निसंसो महब्भओ बीहणओ तासणओ अणज्जाओ उव्वेयणओ य णिरवयक्खो निद्धम्मो निप्पिवासो निक्कलुणो निरयवासगमणनिधणो मोहमहब्भयपवड्ढओ मरणवेमणसो पढमं अहम्मदारं समत्तं ति बेमि ॥१॥ ( सू० ४ )

एवमुक्तप्रकारेण नरकतिर्यग्योनौ कुत्सितमानुषत्वं च हिंडमाणाः–अधिगच्छन्तः प्राप्नुवन्ति अनन्तकानि दुःखानि ते पापकारिणः पुरुषाः । एषः सः प्राणिवधस्य फलविपाकः इह लौकिको मनुष्यभवाऽपेक्षया, पारलौकिको नरकगत्याद्याश्रित्य, अल्पसुखः–कुत्सितेन्द्रियभोगसंपादनात्, अविद्यमानसुखः, नरकादिदुःखकारणत्वाद् बहुदुःखः, महाभयरूपः, बहुरजः--प्रभूत-

कर्मप्रगाढं दुर्मोचं यत्र स तथा, दारुणो रौद्रः, कर्कशः--कठिनः असातवेदनीयरूपः, वर्षसहस्रैः कृत्वा मुच्यते प्राणी इति शेषः । न च तं विपाकं अवेदयित्वा अननुभूय अस्ति मोक्षः, अस्मात् प्राणिवधकर्मणः इदं आश्रवद्वारं केन प्रतिपादितं तदाऽऽह—

एवमुक्तरीत्या आख्यातवान् कथितवान् ज्ञातकुलनन्दनः क्षत्रियप्रधानश्रीसिद्धार्थपुत्रः महात्मा परमात्मरूपः रागादिजेत्रः श्रीवीरवर्द्धमानः वरनामधेयः प्रशस्तनामा कथितवान् । प्राणिवधफलविपाकं अत्राऽध्ययनार्थस्य महावीराभिहितत्वं दर्शितं, पुनः कथितवान् इति यदुक्तं तत्प्राणिवधस्य महाविपाकदर्शनार्थं एषः सः प्राणिवधः चण्डः कोपनस्तदन्तर्वर्त्ती रौद्रो दारुणविपाकहेतुः, नीचजनाचरितत्वात् क्षुद्रः, अनार्यलोकस्याऽयं करणीय इति अनार्यः, अविद्यमानदयात्वात् निर्घृणः, निःशूकजनाऽऽचरितत्वात् निःशूकः, महाभयहेतुत्वात् महाभयः, भयवन्नरासेवितत्वात् वीहनकः उत्त्रासनहेतुत्वात् त्रासनकः, अकस्माद्भयहेतुः, न्यायातिक्रान्तत्वात् अन्यायः, अथवा गत--ऋजुभावत्वात् अनर्जुकः, उद्वेजनकारित्वात् उद्वेजनकः, परप्राणान् न अपेक्षते इति निरपेक्षः, धर्मात् अपगत इति निर्धर्मः. वध्यं प्रति स्नेहाभावात् निःपिपासकः, निर्गता करुणा यस्मात् सः निःकरुणः, नरकावासेषु यद्गमनं गतिस्तद्रूपं निधनं--मरणं यस्य सः, मोहोऽज्ञानं महामोहो मिथ्यादर्शनं तदेवभयं तस्य प्रकर्षकः उत्कृष्टफलद इत्यर्थः, मरणेन वैमनस्यं--दैन्यं यस्य सः मरणवैमनस्यः ॥ प्रथमं आद्यं अधर्मद्वारं मृषावादाद्यपेक्षया परं इदमनादिरूपं चेत्यर्थः, आश्रवद्वारं पापागमनद्वारं व्यक्तव्यताऽपेक्षया समाप्तं--निष्ठागतं, इतिशब्दः समाप्तौ, ब्रवीमीति--कथयामि तीर्थंकरोपदेशेन न तु स्वबुद्ध्या, इति इत्थं ॥ सुधर्म्मस्वामिना स्ववचसि सर्वज्ञवचनात् अव्यभिचारीति दर्शितं प्रत्ययोत्पादनार्थं गुरुपारतन्त्र्याऽऽविष्करणार्थं विनेयानां च एतन्नाम्नाय प्रदर्शनार्थं चेति व्याख्यातं ॥ इति ॥

**दशमोपाङ्गस्य प्रश्नव्याकरणनामरूपस्य प्रथमाश्रवस्य विवरणमेतल्लिखितं समासेन इति प्रथमं द्वारम्।**

# ॥ अथ द्वितीयं अध्ययनम् ॥

व्याख्यातं प्रथमध्ययनं। साम्प्रतं द्वितीयमारभ्यते

अस्य चाऽयं सम्बन्धः-पूर्वस्वरूपादिविशेषणैः प्राणातिपातः उक्तः, स तु मृषाभाषणहेतुकः क्रोधलोभभयहासाद्भवति क्रोधादयस्तु प्राणिवधकारकास्ते तु मृषावादेनैव साध्या, अनेन सम्बन्धेनाऽऽयातस्येदमाऽऽदिसूत्रम्—

इह खलु जंबू बितियं च अलियवयणं लहुसग-लहुचवलभणियं, भयकरं, दुहकरं, अयसकरं, वेरकारगं, रति-अरति-राग-दोसमणसंकिलेस-वियरणं अलियं नियडिसातिजोयबहुलं, नीयजणनिसेवियं, निस्संसं, अप्पच्चयकारकं, परमसाहुगरहणिज्जं, परपीलाकारगं परमकिण्हलेस्ससहियं, दुग्गइविणिवायविवड्ढणं, भवपुणब्भवकरं, चिरपरिचियमणुगतं, दुरन्तं, कित्तियं, बितियं अधम्मदारं। (सू० ५)

इह शास्त्रे, खलु निश्चयार्थ, जम्बू इति शिष्याऽऽमन्त्रणं, द्वितीयं पुनः आश्रवद्वारं, अलीकवचनं मृषावाद इति नाम इदमपि यादृशादि पञ्चभिः द्वारैः प्ररूप्यन्ते—

लघुगुणगौरवरहितः स्वक-आत्मा येषां ते लघुस्वकाः तेभ्यो ये लघवः चपला कायादिभिः तैर्भणितं किदृशं ? भयकरं, दुक्खकरं, अयशःकरं, वैरकारकम्, रतिअरतिरागद्वेषमनःसंक्लेशं ते वितरति ददातीति रति-अरति-राग-द्वेष-मनःसंक्लेश

तस्स य णामाणि गोण्णाणि होंति तीसं, तंजहा—अलियं १ सढं २ अणज्जं ३ मायामोसो ४ असंतकं ५ कूड-कवडमवत्थुगं च ६ निरत्थयवमत्थयं च ७ विद्देसगरहणिज्जं ८ अणुज्जुकं ९ कक्कणा य १० वंचणा य ११

वितरणं, अलीकं शुभफलापेक्षया निःफलं, निःकृतिर्वंचनप्रच्छादनार्थं साऽति—अविश्वासो वचनस्य तस्य योगो—व्यापारस्तेन वहुलं—प्रचुरं यत्र तत्तथा, नीचैर्जात्यादिहीनजनैः प्राय इदं निषेवितं—कृतं, नृशंसं—क्रुरं अथवा निःशंसं—प्रशंसारहितं, अप्रत्यय-कारकं—विश्वासविनाशकं, परमाः—प्रकृष्टा योगध्यानादिना ये साधवस्तैर्गर्हितं त्यागीकृतत्वात्, परेषां पीडाकारकं, परमकृष्णलेश्या-सहितं—संक्लिष्टाऽध्यवसायेन क्रूरमनस्तेन सहितं, दुर्गतौ यो निपातः—पतनं तस्य विशेषेण वृद्धिकृत्, तथा भवे—संसारे पुनः पुन-र्वारंवारं जन्म करोतीति पुनर्भवकरं, अनागतापेक्षया अतीतकालापेक्षया पूर्वभवे अपि तथैव करणं अनादिभवाभ्यासात् चिरपरिचितं, —मिथ्यात्वाविरतिप्रवाहाऽनुच्छेदात् अनुगतं, विपाकदारुणत्वात् दुरन्तं, कीर्त्तितं—कथितं, द्वितीयं—प्रथमावरजं तृतीयाग्रजं इत्यर्थः, अधर्मद्वारं पापोपायमिति एतेन प्रथमं यादृशं इति उक्त विशेषणं ।

तस्य—द्वितीयस्य अधर्मद्वारस्य इमानि अग्रे वक्ष्यमाणानि नामानि—अभिधानानि गुणनिष्पन्नानि गौण्यानि भवन्ति, त्रिंशत् संख्याकानि तद्यथा दर्शयति—

अलीकं—वितथभाषणत्वात् १, शठं—शठस्य मानत्वात् २, अनार्यवचनत्वात् अनार्यं ३, मायालक्षणकषायाऽनुगतत्वात् मृषारू-पत्वाच्च मायामृषा ४, असदर्थाभिधानरूपत्वादसत्कम् ५, कूटं—परवञ्चनार्थं न्यूनाधिकभाषणं कपटं—भाषाविपर्ययकरणं अविद्यमानवस्तुभाषणं अवस्तु गोपुच्छे देववास इत्यादिरूपं पदत्रयमीलने 'कूडकवडमवत्थुगं' एकैव नाम ६, निरर्थकं-सत्यार्थहीनं

मिच्छापच्छाकडं च १२ साती उ १३ उच्छन्नं [उच्छूत्तं] १४ उक्कूलं च १५ अट्टं १६ अब्भक्खाणं च १७ किब्बिसं १८ वलयं १९ गहणं च २० मम्मणं च २१ नूमं २२ नियडी २३ अप्पच्चओ २४ असंमओ २५ असच्चसंधत्तणं २६ विवक्खो २७ 'उवहीयं २८ उवहिअसुद्धं २९। अवलोवोत्ति ३०, 'बिइयस्स इमाणि एवमाइयाणि एयाणि नामधेज्जाणि

अधर्मद्वारे पापवादस्य स्वरूपम् नामानि च सू–६

अतएव अपगतसत्यार्थमिति निरत्थयमवत्थयं ७, विद्वेषो–मत्सरस्तस्माद् गर्हते गर्ह्यते वा ८, अनृजुं वक्रं ९, कल्कं पापं तत्करणं १०, वञ्चना इत्यिवञ्चनं ११, मिथ्यात्वादिनिराकृतं मिच्छापच्छाकरणं न्यायवादिभिर्वारितं १२, सातिः–अविश्वासः १३, शब्दं–विरूपं इति पाठेतु स्वदोषाणामाच्छादनं परगुणानामावरणं उच्छन्नं अन्यार्थभाषणं वा न्यूनाधिकत्वं उत्सूत्रं १४, उक्कूलं अथवा सरित्प्रवाहतटाद् ऊर्ध्वं वहति तथा मार्गतटादुपरि वहति १५, आर्त्त–ऋतस्य पीडितस्येदं वचनं आर्त्तं १६, असद्दोषारोपणमभ्याख्यानं १७, किल्बिषस्य पापस्य हेतुत्वात् किल्बिषं १८, वलयमिव वक्रत्वाद् वलयं १९, गहनमिव दुर्लक्ष्यचित्तत्वाद्गहनं २० अस्फुटत्वाद् मन्मनमिव मन्मनं २१, परगुणाच्छादनार्थपिधानमेव पिधानं नुमं २२, मायया परगुणाच्छादनं तथा स्वमायायाः छादनं निःकृतिः २३, अप्रत्ययः प्रत्ययाभावः २४, असम्यग् आचारः असम्मतः २५, असत्यं अलीकं संदधाति–अविच्छिन्नं करोतीति असत्यसन्धस्तद्भावोऽस्येति असत्यसन्धत्वं मृषेव भाषणं २६, सत्यस्य सुनृतस्य विपक्षं २७, उपधिर्माया तस्या गृहं आधारभूतत्वात् २८, असत्पदानि अस्मिन्निति अशुद्धं उवहियं इति पाठे जिनाज्ञामतिक्रामणशीलमिति अथवा उपधिः–सावद्यं तेनाशुद्धं उपध्यशुद्धं २९, अलपनं अवलोपः ३०, ॥ द्वितीयस्य अधर्मद्वारस्य इमानि कथितानि नामानि एतादृशानि वस्तुगत्या गुणेन वा नामधेयानि

१ अवहीयं आणाइयं क संज्ञिके २ अविय तस्स एयाणि एवमादीणि क संज्ञिके ३ ओलवणुं इति लोक भाषा.

होंति तीसं सावज्जस्स अलियस्स वयजोगस्स अणेगाइं ( सू० ६ )

तं च पुण वदंति केइ अलियं पावा असंजया, अविरया, कवडकुडिलकडुयचटुलभावा, कुद्धा, लुद्धा, भयाय हस्सट्ठिया य, सक्खी, चोरा, चारभडा, खंडरक्खा, जियजूयकरा य गहियगहणा, कक्ककुरुगकारगा, कुलिंगी, उवहिया वाणियगा य, कूडतुलकूडमाणी, कुडकाहावणोवजीविया, पडगारका अभिधातुं योग्यानि त्रिंशत् नामानि भवन्ति, सावद्यस्य—सपापस्य आश्रवद्वारस्य इह वाक्ये अलीकस्य मृषावादस्येत्यक्षरघटना कार्या वचनयोगं गतस्य भाषमाणस्येत्यर्थः । 'भासिज्जमाणी भाषा' इति वचनात्, तं अलीकं अनेके अनेकप्रकारं वदन्ति । च—समुच्चयार्थे पुनः—एवाऽर्थे—

के ते पापाः ? पापात्मानः अलीकं वदन्ति तान् सूत्रकार आह इति योगः ॥ असंयता—असंयमवन्तः इन्द्रियाऽनिरोधकाः, अविरताः—पापात् न निवृत्ताः, पुनः कीदृशाः ? कपटेन कुटिलो—वक्रः कटुको विपाकदारुणत्वात् चटुलश्च विविधवस्तुषु आकांक्षारूपो भावः—चित्तं येषां ते तथा, 'क्रुद्धा लुद्धा' इति पूर्ववत् सूत्राणि वाच्यानि, क्रुद्धा अपि अलीकं वदन्ति लुद्धा अपि क्रुद्धलुद्धा अपि इत्यादि सुगमं । भयोत्पादनाय परेषां अथवा भयावहं भणन्ति हासार्थिनोऽपि अलीकं भाषन्ते, पाठान्तरे हास्यार्थमपि अलीकं, कुटसाक्षिणः, चौराः—दस्यवः, चारभटाः—आरक्षकाः, खण्डरक्षाः—शुल्कपाला मांडविया, जिताः संतो द्यूतकराः, गृहीतधनग्रहणेन ये अन्यं प्रति निग्रहकारिणस्ते पुरुषा एतावता गृहीतग्रहणानि यैस्ते, कल्कगुरुकं मायाकारकं वाक्यं तत्कारकाः, कुलिङ्गिनो

१ दाणी इति लोक भाषा. २ पतलई मीठा बोला.

कलाया कामइज्ञा वंचणपरा, चारियचाडुयारनगरगोत्तियपरियारगा दुट्ठवायि-सूयक-अणबल भणिया य पुव्वकालियवयणदच्छा, साहसिका, लहुस्सगा, असच्चा, गारविया, असच्चट्ठावणाहिचित्ता, उच्चच्छंदा, अणिग्गहा, अणियता, छंदेण मुक्कवाया भवंति ॥ अलियाहिं जे अविरया, अवरे नत्थिक्कवाइणो वामलोकवादी कुतीर्थिकाः, औपधिकाः मायाचारिणः, वणिजाः व्यापारकारिणः, कूटतूलाकूटमानकारिणः कूटकार्षापणोपजीविनः, अथवा कूटरूपोपजीविनः कूडधम्मी, पटकारकाः—तन्तुवायाः, कलादाः सुवर्णकारकाः, कौरुकेषु—वरुटच्छिपकादिषु भवाः वञ्चनतत्पराः, चारिकाः—हेरिकाः, चाटुकाराः—मुखमङ्गलकराः, नगरगुप्तिकाः—कोट्टपालाः, परिचारका ये मैथुनाभिष्वंगे परिचारं कुर्वन्ति, दुष्टवादिनोऽसत्पक्षग्राहिणः, शूचकाः पिशुनाः, ये बलेन ऋणं गृह्णन्ति ते ऋणबलग्राहिणः अस्मत् द्रव्यं देहीत्येव भणिताः, पूर्वकालिकवचने ये दक्षा वक्तुकामस्य वचनात् यत्पूर्वं अभिधाय पराभिप्रायं लक्षयित्वा यद्वचनं भणन्ति ते पूर्वकालिकदक्षाः, सहसा—अविचार्य भाषन्ते ते साहसिकाः, लघुस्वकाः तुच्छात्मनः, सद्भ्यः अहिताः असत्याः, गौरविकाः ऋद्ध्यादिगौरवत्रययुक्ताः, असत्यानां असद्भूतानां अर्थानां स्थापनां—प्रतिष्ठामधि चित्तं येषां ते असत्यस्थापनाधिचित्ताः, उच्चो—महान् आत्मोत्कर्षेण छन्दो—अभिप्रायो येषां ते उच्चछन्दाः स्वैराचारा इत्यर्थः, अनिग्रहाः—स्वैराः अतएव अनियता अनियमवन्तः अनवस्थिताः, अनिजका वा अविद्यमानस्वजनाः, तथा छन्देन—स्वाभिप्रायेण मुक्तवाचो—यथा तथा भाषिणः अथवा छन्देन सिद्धवादिनो वयमेव सिद्धवादिनः

१ कुडी मुद्रा करी जीवे इति लोक भाषा. २ कारुकीका जेतला कारुनारु विज्ञाने जीवें ते जाणवा. ३ कोट्टना नहिं इति लोक भाषा.

**भणंति [सुणंति] नत्थि जीवो न जाइ इह परे वा लोए न य किंचिवि फुसति पुन्नपावं, नत्थि फलं सुकयदुक्कयाणं, पंचमहाभूतियं सरीरं भासंति हे ! वातजोगजुत्तं,**

ते के भवन्ति इत्याह ?

अलीकाद् ये अविरताः तथा पूर्वोक्तेभ्यः अन्ये–अपरेऽपि भवन्ति ते के इत्याह ? नास्तिकवादिनः–लोकायतिकमतवादिनः सम्प्रति द्रष्ट एव लोकः, नास्ति किञ्चिदन्यत् । वामं सतामपि लोकवस्तूनां असत्त्वमतिपादनं वदन्ति ते वामलोकवादिनः, केऽपि भणन्ति–मरूपयन्ति शून्यं इति जगत् शून्यवादिनः, कथं आकाराद्यभावे [आत्माद्यभावात्] एव जगत् अतएव नास्ति जीवः तत्साधकप्रमाणाभावात्, तत्कथं ? नास्ति आत्मा मत्यक्षग्राह्यः, कथं ? इन्द्रियविषयग्रहणगोचराभावान्नाऽपि अनुमानग्राह्यः कथं ? मत्यक्षेण तदुद्देश्यमन्तरा अनुमानस्याऽमवृत्तिः यथा द्रष्टे धूमे अग्निरनुमीयते, नाऽपि आगमतो परस्परविरुद्धत्वेन अममाणत्वात्, नाऽपि उपमानं असत्ये कस्य उपमीयते, तस्मात् न याति–न गच्छति इह मनुष्यलोके परे वाऽपरस्मिन् लोके देवादिलोके न किञ्चिदपि स्पृशति तस्य पुण्यपापं–शुभाशुभं कर्म, नास्ति फलं सुकृतदुष्कृतानां पुण्यपापकर्मणां जीवाऽसत्त्वेन तयोरसत्त्वादतएव सर्वशून्यमीति ॥

यथा केचित् पञ्च महाभौतिकं शरीरं भापन्ते पृथिव्यप्तेजोवायुआकाशमयं तत्र पञ्चमहाभौतिकमिति–महान्ति च तानि लोके व्यापकत्वात् सद्भूतानि–पृथिवी–कठिनरूपा, आपो द्रवलक्षणाः, तेज उष्णरूपं, वायुश्चलनलक्षणः, आकाशं शुषिरलक्षणं तन्मयमेव शरीरं नाऽपरः । शरीरवर्त्ती तन्निष्पादकोऽस्ति जीव इति विवक्षा, भूतान्येव सन्ति, यत्तु चैतन्यं भूतेषु उपलभ्यते तद्भूतेषु कायाकारपरिणतेषु लक्ष्यते मद्याङ्गेषु समुदितेषु मदशक्तिवत्, पृथक् चैतन्यं दृश्यमाणं नास्ति, यथा घटाकारपरिणत-

पंच य खंधे भणंति केई, मणं च मणजीविका वदंति, वाउजीवोत्ति एवमाहंसु, सरीरं सादियं सनिधणं इह भवे मृद्घटवदिति व्यपदिश्यते, ततो भूतानामेव चैतन्याऽभिव्यक्तिः जलस्य बुद्बुदाभिव्यक्तिवत् इति अलीकवादिनां आत्मनः सत्त्वेऽप्यसत्त्वमिति संक्षेपः॥

अथात्मनः सत्त्वं प्रमाणोपपत्तेः सर्वजनप्रतीतं जातिस्मरणाद्युपपत्तिलक्षणमनेकधा शास्त्रान्तरे प्रत्यक्षतया ग्राह्यस्तथा सुखी प्रमाणं च दुःखीत्यादिरूपादनुमानगम्य इत्यादिप्रसिद्धमिति। हे इति निपाते वाक्यालङ्कारे वा, वातयोगयुक्तं प्राणवायुना सर्वक्रियासु प्रवर्त्तनं जायते इत्यर्थः॥ पुनः केचित् बौद्धादयः पञ्च स्कन्धान् भणन्ति रूप १ वेदना २ विज्ञान ३ संज्ञा ४ संस्कारा ५ ख्यान् कथयन्ति। तत्र रूपस्कन्धः-पृथिवीधात्वादयो रूपादयः, वेदनास्कन्धः-सुखा दुक्खा सुखदुक्खा चेति त्रिविधवेदना स्वभावः, विज्ञानस्कन्धः-रूपादिविज्ञानकर्तृत्वलक्षणः। संज्ञास्कन्धश्च संज्ञानिमित्तोद्ग्राहणात्मकः प्रत्ययः संस्कारस्कन्धः पुण्यापुण्यादिधर्मसमुदायः इति न च एतेभ्यो व्यतिरिक्तः कश्चित् आत्माख्यः पदार्थः साक्षात् ज्ञायते इति तेषां मतमिति। न केवलं पञ्चस्कन्धान् मन्यन्ते किन्तु मनस्काररूपादिलक्षणानां उपानकारणलक्षणोऽपि मन्यते बौद्धैः, यमाश्रित्य परलोकोऽप्यभ्युपगम्यते। अतो मन एव जीवो येषां ते मनोजीवास्त एव मनोजाविकाः। अलीकवादिता तेषां सर्वथाऽननुगामिनि मनोमात्ररूपे जीवे कल्पितेऽपि परलोकासिद्धेः॥

वातः-उच्छ्वासादिलक्षणो जीव इत्याहुः केचित् अलीकवादिनः वायुरेव जीवनमरणव्यपदेशस्तस्मादन्यो नास्ति जीवः, तथा शरीरं सादि उत्पन्नत्वात् सनिधनं क्षयदर्शनात् इह भवे एव प्रत्यक्षजन्म तस्मात् एक एव भवो-जन्म नान्यः परलोकोऽ

एगे भवे तस्स विप्पणासंमि सव्वनासोत्ति,एवं जंपंति मुसावादी, तम्हा दाणवयपोसहाणं तवसंजमबंभचेरकल्लाणमाइयाणं नत्थि फलं,नवि य पाणवहे अलियवयणं न चेव चोरिक्ककरण–परदारसेवणं वा सपरिग्गहपावकम्मकरणंपि नत्थि किंचि न नेरइयतिरियमणुयाण जोणी, न देवलोको वा अत्थि, न य अत्थि सिद्धिगमणं, अम्मापियरो

स्ति, तस्य शरीरस्य विविधैः प्रकारैः प्रकृष्टो नाशस्तस्मिन् सति सर्वनाशः इति नात्मा नाऽपि शुभाशुभरूपं वा कर्म शिष्यते इति, एवमुक्तप्रकारं जल्पन्ति, मृषावादिनः, येषामपि जातिस्मृत्यादिना जीव परलोकप्रसिद्धेः परं स्वकीयाऽभिनिवेशो न मुञ्चन्ति। पुनरन्यदपि वदन्ति किं तस्मात् दानव्रततपपौषधानां–वितरणनियमपर्वोपवासानां तपोऽनशनादिः संयमः–पृथव्यादिरक्षा ब्रह्मचर्यं प्रतीतं एतान्येव कल्याणहेतुत्वात् कल्याणकारीणि–आरोग्यजनकानि तदादिर्येषां तानि एवमादिकानां श्रद्धाज्ञानचरणादीनां आचरणे कृतकारितानुमोदनादिषु नास्ति फलं–कर्मक्षयसुगतिगमनादि। पुनः नास्ति प्राणिवधाऽलीकवचनमशुभफलसाधनतयेति गम्यं, न चैव- नैव चौर्यकरणं–परद्रव्यग्रहणं स्वाशयतः परदारसेवनं वा विषयव्यापाराचरणं अस्ति अशुभफलं साधनतया वा, परिग्रहेण मूर्च्छोत्पादनेन वर्त्तते तत् सपरिग्रहं तच्च पापकर्मकरणं च–पातकक्रियासेवनं तदपि नास्ति किञ्चित्, क्रोधमानाद्यासेवनरूपं तेन हेतुना, नारकतिर्यग्मनुष्याणां योनिका उत्पत्तिरुपा जगतो विचित्रता स्वभावादेव न कर्मजनिता तत्।

कण्टकस्य प्रतीक्ष्णत्वं, मयूरस्य विचित्रता। वर्णाश्च ताम्रचूडानां, स्वभावेन भवन्ति ही ॥१॥ मृषावादिनां वचः। नास्ति देवलोकः पुण्यकर्मफलभूतः। न चैवाऽस्ति सिद्धिगमनं सिद्धस्य चाऽभावात्, तथा मातापितरौ अपि नास्तः उत्पत्ति–

नत्थि, नवि अत्थि पुरिसकारो, पच्चक्खाणमवि नत्थि, नवि आत्थ कालमच्चू य ॥ अरिहंता चक्कवट्टी बलदेवा वासुदेवा नत्थि, नेवत्थि केइ रिसओ, धम्माधम्मफलं च नवि अत्थि किंचि बहुयं च थोवगं वा, तम्हा एवं विजाणिऊण जहा सुबहु इंदियाणुकूलेसु सव्वविसएसु वट्टह णत्थि काइ किरिया वा अकिरिया वा एवं भणंति नत्थिकवादिणो वामलोगवादी,

मात्रनिबन्धनत्वात्, न चाऽस्ति पुरुषाकारो, नियतिरेव सर्वमयोजनानां सिद्धेः उच्यते -

प्राप्तव्यो नियतिबलाश्रयेण योऽर्थः ? सोऽवश्यं भवति नृणां शुभोऽशुभो वा ।
भूतानां महति कृतेऽपि हि प्रयत्ने, नाभाव्यं भवति न भाविनोऽस्ति नाशः ॥ १ ॥

प्रत्याख्यानफलमपि नास्ति, नास्ति कालोऽतीताऽनागतलक्षणः, नास्ति मृत्युः—मरणं, नास्ति अर्हन्तः तीर्थकृतः, चक्रधराः, बलदेवाः, वासुदेवादयो भावाः, नैव केचिदपि ऋषयो गौतमादिमुनयः, धर्माऽधर्मफलमपि नास्ति किञ्चित् बहुकं स्तोकं वा सुकृतस्य फलं, तस्माद्धेतोः एवं विज्ञाय किं कर्त्तव्यं ? तदाह—

यस्मात् सुष्ठु शोभना बहुप्रकारा अत्यर्थं इन्द्रियाणां श्रोतृचक्षुर्घ्राणरसनस्पर्शनानां अनुकूलेषु—रतिदायिषु अर्थेषु--विषयेषु शब्दरूपरसगन्धस्पर्शेषु प्रवर्त्तितव्यं, नास्ति काचित् क्रिया वा [निन्द्य] अनिन्द्यक्रिया वा अक्रिया वा—पापक्रिया वा पापेतर क्रिययोरास्तिककल्पितत्वेनापारमार्थिकत्वात्, एवं भणन्ति च ते—

पिब खाद च चारुलोचने !, यदतीतं वरगात्रि ! तन्नते । नहि भीरु ! गतं निवर्त्तते समुदयमात्रमिदं कलेवरम् ॥१॥

**इमंपि बितीयं कुदंसणं असब्भाववाइणो पण्णवेंति मूढा-संभूतो अंडकाओ लोगो सयंभुणा सयं च निम्मिओ,**

नास्तिकवादिनः—नास्ति नास्ति इति वदन्ति ते नास्तिकवादिनः, वामलोकवादिनः शून्यमतवादिनः इमं द्वितीयं कुदर्शनं नास्तिकमतापेक्षया, कुदर्शनं—कुमतसद्भाववादिनः इदं प्रज्ञापयन्ति मूढा—व्यामोहवन्तः; स्वयं परानपि प्रज्ञापयन्ति यथा—

केचिन्मूढा असद्भावनोद्भावनां जल्पन्ति यथा—स्वयंभुवा ब्रह्मणा वा आत्मना वा निर्मितो लोकः, तत्राण्डकप्रसूतभुवनवादिनां मतमेवं—'यथा पूर्वं जगत् पंचमहाभूतवर्जितं गम्भीरं एकार्णवं जलेन प्लाव्यमानमासीत्—तत्र महत् अण्डं घोलन्तमाणं चिरकालेन स्फोटमानं द्विधा जातं अभ्रं भूमिश्च तत्र सुरासुर—नारकसमनुजसचतुष्पदं जगत्सर्वं उत्पन्नं, इत्यण्डकनिर्मितो जगत्—लोकः। अथ स्वयंभूनिर्मितजगद्वादिनां मतमित्थं—

आसीदिदं तमोभूतमप्रज्ञातमलक्षणं। अप्रतर्क्यमविज्ञेयं, प्रसुप्तमिव सर्वतः ॥ १ ॥
तस्मिन्नेकार्णवीभूते, नष्टस्थावरजङ्गमे। नष्टामरनरे चैव, प्रनष्टे राक्षसोरगे ॥ २ ॥
केवलं गह्वरीभूते, महाभूतविवर्जिते। अचिन्त्यात्मा विभुस्तत्र, शयानस्तप्यते तपः ॥ ३ ॥
तत्र तस्य शयानस्य, नाभेः पद्मं विनिर्गतं। तरुणार्कबिम्बनिभं, हृद्यं काञ्चनकर्णिकम् ॥ ४ ॥
तस्मिन् पद्मे भगवान्, दण्डयज्ञोपवीतसयुक्तः। ब्रह्मा तत्रोत्पन्नस्तेन जगन्मातरः सृष्टाः ॥ ५ ॥
अदितिः सुरसङ्घानां, दितिरसुराणां मनुर्मनुष्याणां। विनता विहंगमानां, माता विश्वप्रकाराणाम् ॥ ६ ॥

एवं एयं अलियं-पयंपंति पयावइणा इस्सरेण य कयंति केति, एवं विण्हुकयं कसिणमेव य जगं केई,

कद्रुः सरीसृपानां, सुलसा माता च नागजातीनां । सुरभिश्चतुष्पदानामिला पुनः सर्वबीजानाम् ॥ ७ ॥

इति अलीकं भ्रान्तिज्ञानिभिः प्ररूपितत्वात्, तथा केचिदिश्वरवादिनः ईश्वरेण कृतो लोकः, यथा-ईश्वरवादिनः-बुद्धिमत्कारणपूर्वकं जगत् संस्थानविशेषयुक्तत्वात्, घटादिवदिति । केचित् विष्णुकृतं कृत्स्नं विश्वमिति भणन्ति यथा—

जले विष्णुः स्थले विष्णुः, विष्णुः पर्वतमस्तके । ज्वालामालाकुले विष्णुः सर्वं विष्णुमयं जगत् ॥ १ ॥

पृथिव्यामप्यहं पार्थ ! वायावग्नौ जलेप्यहं । सर्वभूतगतश्चाहं, तस्मात् सर्वगतोऽस्म्यहम् ॥ २ ॥

तं च मार्कण्डर्षिः तथा—

सो किल जलयसमुत्थेणुदएणेगण्णवम्मि लोगम्मि । वीतीपरंपरेणं घोलन्तो उदयमज्झम्मि ॥१॥

सो किल । पेच्छइ सो तसथावरपणट्ठसुरनरतिरिक्खजोणीयं । एगण्णवं जगमिणं महभूयविवज्जियं गुहिरं॥२॥

एवंविहे जगंमी पेच्छइ नग्गोहपायवं सहसा । मन्दरगिरिव्व तुंगं, महासमुद्दं च विच्छिन्नं ॥ ३ ॥

खंधंमि तस्स सयणं, अच्छइ तहिं बालओ मणमिरामो । [ विष्णुरित्यर्थः ] संविद्धो सुद्धहिअओ मिउ कोमलकुंचियसुकेसो ॥ ४ ॥ हत्थो पसारिओ से महरिसिणो एह तत्थ भणिओ य ॥ खंधं इमं विलग्गसु मा मरिहिसि उदयबुड्डीए ॥ ५ ॥ तेण य घेत्तुं हत्थे उ मीलिओ सो रिसी तओ तस्स ॥ पेच्छइ उदरंमि जयं ससेलवणकाणणं सव्वं ॥ ६ ॥

एवमेके वदंति मोसं एगो आया अकारको अवेदको य सुकयस्स य करणाणि कारणाणि सव्वहा सव्वहिं च निच्चो य निक्किओ निग्गुणो य

पुनः सृष्टिकाले विष्णुना सर्वं सृष्टमिति प्रवादिनां कुदर्शिता ज्ञेया.

तथा एके केचनात्माद्वैतवादिनो भणन्त्यलीकं यथा–एक एव आत्मा सर्वव्यापकस्तदुक्तं–

एक एव हि भूतात्मा, भूते भूते व्यवस्थितः। एकधा बहुधा चैव, दृश्यते जलचन्द्रवत् ॥ १ ॥

तथा पुरुषएवेदं ग्निं सर्वं यद्भूतं यच्चाव्यमित्यादि कुदर्शनता चाऽस्य सकललोकविलोक्यमानभेदनिबन्धनव्यवहारोच्छेद प्रसंगात्। तथा अन्ये वदन्ति सुक्खदुक्खहेतूनां अकारकः, पुण्यपापकर्मणामकर्त्ता अलीकमिति कुदर्शनना च संसार्यवस्थायां तदभावादिति। केचिन्नित्यवादिनो जल्पन्ति आत्मा नित्यः यथा—

नैनं छिन्दन्ति शस्त्राणि, नैनं दहति पावकः। न चैनं क्लेदयन्त्यापो, न शोषयति मारुतः ॥ १ ॥

अछेद्योऽयमभेद्योऽयममूर्तोऽयं सनातन।

इति एतदपि असत्, एकान्तनित्यत्वे हि सुखदुःखबन्धमोक्षाद्यभावप्रसंगात्, तथा निष्क्रियः सर्वव्यापित्वेनाऽवकाशाऽभावात् गमनाऽगमनादिक्रियावर्जितः एके केचित् इति वदन्ति तदपि असत्, देहमात्रोपलभ्यमानत्वात्। केचित् निर्गुणो वदन्ति सत्वरज-स्तमोलक्षणगुणव्यतिरिक्तत्वात् प्रकृतेरेव ह्येते गुणा यदुक्तं—

अकर्त्ता निर्गुणो भोक्ता, आत्मा कापिलदर्शने।

इति तदपि असत्, सर्वथा निर्गुणत्वं चैतन्यं पुरुषस्य स्वरूपमित्यभ्युपगमात्। केचन अबन्धन इति वदन्ति यदुक्तं—

यस्मान्न बध्यते नाऽपि मुच्यते नाऽपि संसरति कश्चित्। संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः ॥ १ ॥

इति वचनात्;

असच्चैतत् मुक्तामुक्तयोरेवमविशेषप्रसंगात्। तथा केचित् जगदिदं मन्यते

कालः सृजति भूतानि, कालः संहरते प्रजाः। कालः सुप्तेषु जागर्ति, कालो हि दुरतिक्रमः ॥ १ ॥

कालेन कवलिताः सर्वे, भावाश्चाऽनित्यतांगता। इति वचनात्,

तदपि असत्, क्षणमात्रत्वात् तस्याकर्तृत्वोपादानात्।

केचित् स्वभावभावितं जगत् मन्यन्ते, स्वभावेनैव सर्वः संपद्यते शुण्ठिहरीतक्यादीनां तिक्तविरोकादयो गुणा स्वभावेनैव.

रविरुष्णः शशी शीतः, स्थिरोऽद्रिः पवनश्चलः। न श्मश्रुः स्त्रीमुखे हस्ततलेषु न कचोद्गमः ॥ १ ॥

भव्याऽभव्यादयो भावाः स्वभावेनैव जृम्भते। इति वचनात्,

तदप्यसत्, तदपि 'निसर्गतो यत्नाच्च स्वभाववैयर्थ्यदर्शनात्।

केचिन्नियतिभावितं जगदिति जल्पन्ति भवितव्यतैव सर्वत्र वलीयसीति यथा—

प्राप्तव्यमर्थं लभते मनुष्यः किं कारणं ? दैवमलङ्घनीयं।

तस्मान्न शोचामि न विस्मयामि यदस्मदीयं नहि तत्परेषाम् ॥ १ ॥

द्वीपादन्यस्मादपि, मध्यादपि जलनिधेर्दिशोऽप्यन्तात्। आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतम्॥१॥
सा सा संपद्यते बुद्धि-र्व्यवसायश्च तादृशः। सहायास्तादृशा ज्ञेया, यादृशी भवितव्यता ॥ २ ॥ इतिवचनात्।

तदप्यलीकं, अचेतनस्य कर्त्तृत्वानुपलम्भात् नियतेरनाश्रितत्वानुपलम्भात् ॥

केचित् कर्मवैचित्र्यं जगद्ब्रुवन्ति तथा—

ब्रह्मा येन कुलालवन्नियमितो, ब्रह्माण्डभाण्डोदरे। विष्णुर्येन दशावतारगहने, क्षिप्तो महासङ्कटे ॥
रुद्रो येन कपोलपाणिपुटकै-र्भिक्षाटनं कारितो। सूर्यो भ्राम्यति नित्यमेव गगने, तस्मै नमः कर्मणे ॥ १ ॥
इति वचनात् ॥

तदप्यसत् यतः—कर्माण्यपि कृतानि भवन्ति तत्कर्त्ता कश्चिद्विलोक्यते तस्मात्तेषां जगत्कर्त्तृत्वे न प्राधान्यं।

तथा केचिदुद्यमवादिनो यथा "दुस्साध्यमप्युद्यमतस्सुसाध्यं भवेदनालस्यवशादभीष्टं" इति वचनात् तद् असद्भूतता चाऽत्र प्रत्येकमेषामेकत्वे जिनमतप्रतिकृष्टत्वात्तथाहि,

कलो सहाव नियई, पुव्वकयं पुरिसकारणे गंता। मिच्छत्तं ते चेव उ,—समासओ होंति सम्मत्तमिति ॥ १ ॥

समुदायेनैव सिद्धिः सर्वभावानामिति सद्वचस्ततो ह्येकदेशेन तथा चैकनयमिलितं वाक्यमलीकमिति ज्ञेयं। जगद्कर्त्तृत्वाकर्त्तृत्वाविचारावलोकिभिस्तत्त्वालोकनिर्णयादयो ग्रन्था विलोकनीयाः संक्षेपस्तु एतत् लिखितम्।

साम्प्रतं प्रस्तुतं व्याख्यामः अधिकारवशादिदं ज्ञेयं—

बौद्धं १ नैयायिकं २ सांख्यं ३, योगं ४ वैशेषिकं ५ तथा। नास्तिकं ६ चेति षड्भेदं, दर्शनानि भवन्ति हि ॥१॥

तथा—जैनं सांख्यं जैमिनीयं, यौगं वैशेषिकं तथा । सौगतं दर्शनान्येवं, नास्तिकं न तु दर्शनम् ॥१॥ इत्यपि पाठः

तथा केचित् यदृच्छावादिनो यथा–सर्वं इश्वरेच्छया–यदृच्छया निष्पद्यते न कोऽपि कर्ता, तदप्यसत्, निरालम्बनीभूता यदृच्छा गगनारविन्दवत् अकर्तृत्वे नोत्पादात् इत्याद्यभ्यूह्यं बृहद्वृत्तितः विस्तारार्थिनेति ॥

[1]सम्भूतो–जातो अण्डकात्–जन्तुयोनिविशेषात् लोकः–क्षितिजलाऽनलाऽनिलवनस्पतिनारकनरनाकितिर्यग्रूपः, एके केचित् वदन्ति स्वयंभुवा–ब्रह्मणा स्वयं–आत्मना निर्मितो–निष्पादितो लोकः एवं अलीकं भ्रान्तिज्ञानिभिः प्ररूपितत्वात् । तथा प्रजापतिना–लोकप्रभुणा तथा इश्वरेण च–महेश्वरेण च कृतं–विहितं इति केचित् वादिनः । एवं विश्णुना–कृष्णेन कृतं कृत्सनं–सकलमेव जगत् [2]जले विष्णु स्थले विष्णुरिति वचनात् । एके केचित् कुदर्शनिनो एवं मृषा वदन्ति–एक एव आत्मा–सर्वजगद्व्यापकः,अकारकः–कर्मणां अकर्त्ता, अवेदकः–अभोक्ता सुकृतस्य–शुभफलस्य दुःकृतस्य–पापफलस्य च, करणानि–इन्द्रियाणि, कारणानि–हेतवो मिथ्यात्वाऽविरतिकषाययोगप्रमादाः सर्वथा–सर्वप्रकारैः सर्वप्रदेशे काले च न वस्त्वन्तरं कारणमित्यर्थः, करणानि–इन्द्रियाणि एकादश तत्र–वाक्पाणिपादपायूपस्थलक्षणानि पञ्च कर्मेन्द्रियाणि स्पर्शनादीनि तु पञ्च बुद्धीन्द्रियाणि एवं १०

१ ‘संभूतो अंडकाओ लोगो......निक्किओ निगुणोय’ यावत् मूलपाठो विस्तृतविवरणे प्राग् न्यस्तोऽतोऽधुना शब्दार्थ मात्रविवरणेऽस्मिन् स्थले न न्यस्तः

२ जले विष्णुः स्थले विष्णुर्विष्णुः पर्वतमस्तके । ज्वालामालाकुले विष्णुः सर्वं विष्णुमयं जगत् ॥ १ ॥

अणुवलेवओ त्ति विय एवमाहंसु असब्भावं, जंपि इहं किंचि जीवलोके दीसइ सुकयं वा दुकयं वा एयं जदिच्छाए वा सहावेण वावि दइवतप्पभावओ वावि भवति, तत्थेत्थं किंचि कयकं तत्तं लक्खणविहाणनियतीए कारियं एकादशमं च मनः ११ इति एषां चाऽचेतनावस्थायामकारकत्वात् पुरुषस्यैव कारकत्वेन कुदर्शनत्वं अस्य ज्ञेयं । तथा नित्यः–शाश्वतः, तथा निष्क्रियः–क्रियावर्जितः, निर्गुणः–शब्दादिगुणरहितः, अनुलेपकः–कर्मबन्धरहितः केचिदित्यादिप्रकारान् असद्भावान् भाषन्ते–प्रलपन्ति । यत् किञ्चित् इह–जीवलोके दृश्यते [ तदपि असद्भावं एक–नयैकदेशमाध्यमाणं भाषन्ते ] आस्तिकमतेनस्तु सकृतफलं–सुखं इत्यर्थः, दुष्कृतफलं दुःखं इत्यर्थः, एतदपि यदृच्छया–ईश्वरेच्छया वा स्वभावेन वा । केचित् कालवादिनः केऽपि स्वभाववादिनः—

"[1] "कालः सृजति भूतानि, कालः संहरते प्रजाः" इति वचनात्

"कः कण्टकानां प्रकरोति तैक्ष्ण्यं, विचित्रभावं मृगपक्षिणां च ।

स्वभावतः सर्वमिदं प्रवृत्तं, न कामचारोऽस्ति कुतः प्रयत्नः ?" इति

केऽपि दैवतप्रभावात् विधिसामर्थ्यतो वा लौकिकी भाषा "प्राप्तव्यमर्थं लभते मनुष्यः" इति वचनात्, कालस्वभावनियतिपूर्वकृतकर्मपुरुषाकाराणां भावानां–तत्र इत्थं 'यत् किञ्चित् कृतकं सुकृतदुःकृतादिकं तत्त्वं तत्स्वरूपत्वं–तत्सर्व लक्षणविधानं नियत्या कृतं कारापितं तदसत्यता पूर्ववद् वाच्या ।

---

१ कालः सृजति भूतानि कालः संहरते प्रजाः । कालः सुप्तेषु जागर्ति कालो हि दुरतिक्रमः ॥ २ ॥

एवं केइ जंपंति इड्ढिरससायगारवपरा, बहवे धम्मकरणालसा परूवेंति धम्मवीमंसएण मोसं ॥

अवरे अहम्मओ रायदुट्ठं अब्भक्खाणं भणेंति–अलियं चोरोत्ति अचोरयं करेंतं डामरिउत्तिव य एमेव उदासीणं दुस्सीलोत्ति य परदारं गच्छतित्ति मइलिंति सीलकलियं अयंपि गुरुतप्पओ, अण्णे एमेव भणंति उवाहणंता मित्तकलत्ताइं सेवंति अयंपि लुत्तधम्मो, इमोवि विस्संभवाइओ पावकम्मकारी

केऽपि इदं जल्पन्ति "इड्ढित्ति" ऋद्धिरसशातागारवेषु आदरपरास्तत्प्रधानाः नास्तिकादयो बहवो जीवाः धर्मकरणालसा–श्रमणधर्मं प्रति अनुद्यममानाः स्वस्य परेषां च चित्ताश्वासनिमित्तं । तथा प्ररूपयन्ति धर्मविमर्शकेण–धर्मविचारणेनेति मोसं–मृषा पारमार्थिकधर्ममपि स्वबुद्धिदुर्विलसितेन अधर्मं स्थापयन्ति ।

अपरे केचन अधर्म्मतः अधर्ममङ्गीकृत्य राजदुष्टं–नृपतिविरुद्धं अभ्याख्यानं–परस्य दूषणवचनं भणन्ति, किं तत्? अलीकं–असत्यं? चौर इति भणन्ति अचौर्यं कुर्वन्तं चौर इति, तथा डामरिकः–विग्रहकारीति चेति–समुच्चये भणन्तीति, एवमेवेत्ति–प्रयोजनं विनैव दुषणं भवति उदासीनं–विरोधिनं । दुःशील इति च परदारान् गच्छति इति परदारग इति अभ्याख्यानदानेन मलिनीकुर्वन्ति शीलकलितं–सदाचारयुक्तमपि पुरुषं । अन्ये एव भणन्ति वृथा अन्यस्य आजीविकां वा कीर्त्तिं वा ध्वंसयन्ति, न केवलं स एव सेवको गुरुः किन्तु एतादृशं अभ्याख्यानं भणति अयमपि गुरुतल्पको दुर्विनीत इति । अन्ये पापात्मानः एवं जल्पन्ति उपहन्य–घातयित्वा मित्रकलत्राणि सेव्यन्ते न केवलं एतादृशं कुर्वन्ति ते अधमाः परं एतादृशं यो भणति अयमपि लुप्तधर्म्मा–धर्मोच्छेदकर्त्ता, अयमपि विस्रब्धघातकः–विश्वासघातकी पापकर्म्मकारी स्वभूमिकाऽनुचितकारी–अकर्म्मकारी–

**अगम्मगामी अयं दुरप्पा बहुएसु य पापगेसु जुत्तोत्ति एवं जंपंति मच्छरी, भद्दके वा गुणकित्तिनेहपरलोगनिप्पिवासा, एवं ते अलियवयणदच्छा परदोसुप्पायणप्पसत्ता वेढेन्ति। अक्खातियबीएण अप्पाणं कम्मबंधणेण, मुहरी असमिक्खियप्पलावा निक्खेवे अवहरंति–परस्स अत्थंमि गढियगिद्धा अभिजुंजंति य परं असंतएहिं लुद्धा य करेंति कूडसक्खित्तणं, असच्चा अत्थालियं च कन्नालियं च भोमालियं च तह गवालियं च गरुयं भणंति**

विरूपकर्मकारी, भगिन्यादिगन्ता–अगम्यगामीत्यर्थः अयमपि दुष्टात्मा कारकोऽपि वक्ताऽपि चकारात् बहुभिश्च पापकैः सुष्ठु शोभनं तेन युक्तः–सहितः ते एवं जल्पन्ति, मत्सरिणः–धर्मद्वेषिणः भद्रके–निर्दोषे वा पुरुषे एतेषां वाऽलीकवादिनां विनयादिगुण–युक्ते पुरुषे वदन्ति। ते कीदृशा ? अलीकवादिन. गुण–उपकारः कीर्त्तिः–प्रसिद्धिः स्नेहः–प्रीतिः परलोको–जन्मान्तरं एतेषु निःपिपासा–निराकांक्षाः तद्भयमजानानाः एवं अमुना प्रकारेण ते अलीकवचनभाषणे दक्षाः धृष्टाः--परदोषोत्पादनप्रसक्ताः मर्मोद्घट्टनपराः वेष्टयन्तीति योजयन्तीति।

अक्षतबीजेनेति कोऽर्थः। अक्षयेण दुःखहेतुनेत्यर्थः अप्पाणं–आत्मानं स्वं कर्मबन्धनेन प्रतीतेन मुखमेव अरि.--शत्रुरनर्थकारित्वाद् मुखारयः, असमीक्षितप्रलापिनः–अपर्यालोचितकानर्थवादिनः, निक्षेपकान्--न्यासकान् अपहरन्ति परस्य अर्थे–द्रव्ये अत्यन्तगृद्धिमन्तः सन्तः, तथा अभियोजयन्ति परं असद्भिर्दूषणैरिति गम्यं। तथा लुब्धाः किं कुर्वन्ति तदाऽऽह—

व्यक्तं कूटसाक्षित्वं चकारात् ग्रन्थिमोषकपश्यतोहरत्वादि, असत्या–असत्यभाषिणः जीवानामहितकारिणः अर्था-

---

१ नामाणा २ थापणमोसाकारका

अहरगतिगमणं, अन्नंपि य जातिरूवकुलसीलपच्चयं मायाणिगुणं, चवलपिसुणं, परमट्ठभेदकमसकं, विद्देसमणत्थकारकं,पावकम्ममूलं,दुट्ठं,दुस्सुयं,अमुणियं, निल्लज्जं,लोकगरहणिज्जं, वहबंधपरिकिलेसबहुलं, जरामरणदुक्खसोयलीकं–स्वद्रव्यार्थमसत्य भणन्तीति योगः । कन्यालीकं च कुमारीविषयमसत्यं, भूम्यलीकं पृथिव्यादिविषयं प्रतीतं, तथा गवालीकं चतुष्पदविषयं प्रतीतं, गुरुकं–बादरं । जिह्वाच्छेदाद्यनर्थकरं स्वस्य परेषां च गाढोपतापादिहेतुं भणन्ति–भाषन्ते, द्विपदाद्यपदेन द्विपदापदचतुष्पदजातयः उपलक्षणाद्गृहीताः, तदलीकं कीदृशं इत्याह—

अधरगतिगमनं–अधोगतिगमनकारणं, अन्यदपि जाति–रूप–कुल–शीलादिभावानां प्रत्ययः--कारणं तत्र प्रत्ययकं, तत्र जातिर्मातृपक्षः कुलं–पितृपक्षः तद्धेतुकं अलीकं रूपं–आकृतिः शीलं–स्वभावः तत्प्रत्ययं मृषाभाषिणः । मायया निर्गुणं प्रशंसा–निन्दाविषयत्वेन निर्गुणं, प्रशस्यस्य निन्दा निन्दनीयस्य प्रशंसा इति माया । चपला–मनश्चापल्यादिना पिशुनं–परदोषाविष्करणरूपं--परमार्थो–मोक्षस्तं प्रतिघातकं–भेदकं । असत्कमविद्यमानार्थं असत्यकं, अथवा असत्त्वकं--सत्त्वहीनं वा विद्वेष्यं–अप्रियं अनर्थकारकं स्वपरेषां वा पुरुषार्थोपघातकं पुरुषार्थः धर्म–अर्थ–काम–मोक्षवर्गचतुष्टयी असत्कारकं अविद्यमानार्थमसत्यमित्यर्थः । पापकर्म–क्लिष्टज्ञानावरणीयादिकर्म मूलं बीजं, दुष्टं–असम्यग्दर्शनं यत्र तत्, दुष्टं श्रुतं–श्रवणं यत्र तत्, नास्ति मुणितं ज्ञानं यत्र तत् अमुणितं, निर्गता लज्जा यस्मात्तत् निर्लज्जं, लोकगर्हणीयं प्रतीतं । वधो यष्ट्यादिना बन्धो–रज्वादिना परिक्लेशः –शीतातपादिक्लेशः परेषां पराभवस्तैर्बहुला–प्रचूरा यत्र तत् । जरा–वयोहानिः मरणं–सर्वथा प्राणनाशः दुःखं–रोगवियोगाद्य

निम्मं,असुद्धपरिणामसंकिलिट्ठं भणंति,अलिया हिंसंति संनिविट्ठा असंतगुणुदीरका य संतगुणनासका य हिंसा-भूतोवघातितं अलियसंपउत्ता वयणं सावज्जमकुसलं साहुगरहणिज्जं अधम्मजणणं भणंति अणभिगयपुन्नपावा, पुणोवि अधिकरणकिरियापवत्तका बहुविहं अणत्थं अवमद्दं अप्पणो परस्स य करेंति, एमेव जंपमाणा महिस-सूकरे य साहिंति घायगाणं, ससयपसयरोहिए य साहिंति वागुराणं,तित्तिरवट्टकलावके य कविंजलकवोयके य

निष्टं शोकः–चिन्ता शोचनं ते तेषां निम्मं–मूलमित्यर्थः। अशुद्धपरिणामेन संक्लेशं संक्लिष्टपरिणामवत् तथा भणन्ति–भाषन्ते ते के?

अलीको योऽभिसन्धिः–अभिप्रायस्तत्र निविष्टाः–स्थिताः, असद्गुणोदीरकाः, सद्गुणनाशकाश्च हिंसया भूतोपघातः–प्राण्युपमर्दो–विनाशो यत्र भवति तादृशं यत् अलीकवचनं तत्र संप्रयुक्ताः सन्तो भणन्तीति योगः। तत् कीदृशं वचनं? सावद्यं–गर्हितकर्मयुक्तं, जीवानां अकुशलकर्मकारित्वात् अकुशलं, साधुजनैः गर्हणीयं, अतएव अधर्मजनकं–पापोत्पादकं भणन्ति–भाषन्ते। कथंभूतास्ते इत्याह? अविदितपुण्यपापकर्महेतवः तत् ज्ञाने हि मृषावादे प्रवृत्तिर्न संभवति, पुनश्च अज्ञानोत्तरकालं किं जायते इत्याह? अधिकरणं पापारम्भस्तस्य क्रिया–व्यापारास्तत्प्रवृत्तिकाः–निष्पादकाः, तत्राऽधिकरणक्रिया द्विविधा निर्वर्त्तनाऽधिकरणक्रिया संयोजनाऽधिकरणक्रिया च। तत्राद्या खड्गादीनां तन्मुष्ट्यादीनां च निर्वर्त्तनलक्षणा, द्वितीया तु तेषामेव सिद्धानां संयोजनलक्षणेति, अथवा दुर्गतौ यकाभिरधिक्रियन्ते प्राणिनः ताः सर्वा अधिकरणक्रिया इति। बहुविधमनर्थहेतुत्वात् अपमर्दे–तूपमर्दनं आत्मनः परस्य च कुर्वन्ति, एवमेव अबुद्धिकं जल्पन्तो–भाषमाणाः एतदेवेत्याह–महिषान् शूकरांश्च साधयन्ति–प्रतिपादयन्ति घातकानां–अधिकरणं प्रति याचकानां वा साधयन्ति। शशकाः प्रतीताः प्रशकास्तज्जातीया रोहिताः जीवविशेषास्तान्

**साहिंति साउणीणं, झसमगरकच्छभे य साहिंति मच्छियाणं, संखंकेखुल्लए य साहिंति मगराणं, अयगरगोणस-मंडलिदव्वीकरे मउली य साहिंति वालवीणं, गोहा सेहग सल्लगसरडके य साहिंति लुद्धगाणं, गयकुलवानरकुले य साहिंति पासियाणं, सुकबरहिणमयणसालकोइलहंसकुले सारसे य साहिंति पोसगाणं, वधबंधजायणं च**

साधयन्ति एते शशादयः आटव्याश्चतुष्पदविशेषाः वागुरा—मृगबन्धनं सा अस्ति येषां वागुरिणः। तित्तरगवर्त्तकलावककपिञ्जल--कपोतान् एते पक्षिविशेषास्तान् साधयन्ति श्येनादिना मृगयां साधयन्तीति शाकुनिकास्तेषां। झषा—मत्स्याः मकरा—[ बृहत् ] मगरमत्स्या. कच्छपाः—अस्थिचर्मभेदतो जलचरविशेषाः तान् साधयन्ति मत्स्याः पण्यं येषां ते मात्सिकास्तेषां। शंखाः प्रतीताः अङ्कास्तज्जातीयाः क्षुल्लकाः कपर्दकास्तान् साधयन्ति मकरा इव मकरा- जलचरविशेषाः जलविहारित्वात् धीवरास्तेषां पाठान्तरे मग्गिणां तद्गवेषिणां। अजगरा—अजगरविशेषाः, गोनसा—द्विमुखसर्पाः, मण्डलिनो वक्रत्वेन यान्ति, दर्वीकराः—फणीभृतः, येषां फणा मुकुले इव मीलयन्ति ते मुकुलिनः फणरहिताः सर्पास्तान् साधयन्ति। व्याला—भुजङ्गास्तेषां पालाः व्यालपाः गारुडिकाः प्राकृतत्वात् वालवीएणं पाठः अथवा व्यालैः चरन्ति ते वैयालिकास्तेषां। गोधाः—चन्दनगोधाः, सेहास्तज्जातीयाः, शल्यकाः शरटाः कृकलाशाः तान् साधयन्ति लुब्धकाः। गजकुलं तान साधयन्ति पाशेन—बन्धन-विशेषेण चरन्ति ते पाशिकास्तेषां कुटुम्बं यूथमित्यर्थः, शुकाः कीराः, बर्हिणो—मयूराः मदनशारिका कोकिला—

१ नेश लोकभाषा २ कमेडी भाषा ३ होला इति भाषा। ४ गोट भाषा। ५ पारेवा इतिभाषा। ६ काछवा इति भाषा ७ गोहिरा इति भाषा। ८ सीसोलिया ९ काकेडा इति भाषा १० पारधी इति भाषा ११ मीनां कावरी इति भाषा

साहिंति गोम्मियाणं, धणधन्नगवेलए य साहिंति तक्कराणं, गामागरनगरपट्टणे य साहिंति चारियाणं, पारघाइय-पंथघातियाओ साहिंति य गंठिभेयाणं, कयं च चोरियं नगरगोत्तियाणं लंछण-निल्लंछण-धमण-दुहण-पोसण-वणण-दवण-वाहणादियाइं साहिंति बहूणि गोमियाणं धातुमणिसिलप्पवालरयणागरे य साहिंति आगरीणं परभृतः, हंसाः-श्वेतपक्षाः तेषां यानि कुलानि वृन्दानि सारसांस्तान् साधयन्ति पक्षिपोषकाणां पञ्जराजीविकानां। वधस्ताडनं बन्धनं-संयमनं कशादिभिः यातनां कदर्थनां तत् साधयन्ति कुर्वन्ति गुल्मिकानां-गुप्तिपालानां। धनं चतुःप्रकारं हिरण्यादि वा, धान्यं चतुर्विंशतिप्रकारं अशनादि वा, गावोः-बलीवर्दसुरभयः, एलकाः उरभ्रास्तान् साधयन्ति तस्कराणां चौराणां। ग्रामवृत्त्या वृत्तं लघुपुरं, नगरं-करवर्जितं पत्तनादीनि-जल-स्थलभेदात् द्विविधं पत्तनं भव्यवस्तूत्पत्तिस्तान् साधयन्ति चारिकाणां-दूतादिपुरुषाणां। तथा पारे-पर्यन्ते मार्गस्य घातिकाः पथि मार्गस्य मार्गे वा घातिकाः गन्तॄणां हननं अर्द्धपथघातिकाः साधयन्ति, ग्रन्थिभेदकानां वा तत्कर्त्तॄणां वा पैश्यतोहराणां चौरिकां नगरगुप्तिकानां तान् साधयन्तीति योगः। लाञ्छनं, अङ्कनं डम्भनादीनां, निर्लाञ्छनं कर्णविकर्त्तनादि, धमणं ति ध्मानं महिष्यादीनां वायुपूरणं, दोहनं दुग्धादीनां, पोषणं यवसादिदानेन पुष्टिकरणं, वञ्चनं अन्यमातरि योजनं, दुमणं दुवनमुपतापनं, वाहनं-शकटाद्याकर्षणं इत्यादिकानि साधयन्ति बहूनि गोमतां। धातुः-गैरिकादि, धातवो-लोहादयः, मणयः-चन्द्रकान्ताद्याः, शिला-प्रस्तरमयी अथवा मणशिला धातुविशेषः, प्रवाल-विद्रुमं रत्नानि-कर्केतनादीनि तेषां आकराः खानयस्तान् साधयन्ति आकरिणां-आकरवतां।

१ बंदिवान रक्षक इति भाषा २ वाटपाडा इति भाषा ३ फांसीया इति भाषा

पुप्फविहिं फलविहिं च साहिंति मालियाणं, अग्घमहुकोसए य साहिंति वणचराणं, जंताइं विसाइं मूलकम्मं आहेवण-आविंधण-आभिओग-मंतोसहिप्पओगे चोरियपरदारगमणबहुपावकम्मकरणं उक्खंधे गामघातियाओ वणदहणतलागभेयणाणि बुद्धिविसांवणासणाणि वसीकरणमादियाइं भयमरणकिलेसदोसजणणाणि

मालिकानां-पुष्पानां-सर्वजातीयकुसुमानां विधिः-प्रकारः सर्वफलानां वा विधिः-प्रकारः तान् साधयन्तीति योगः, पुष्पजीविकानां अथवा वाटिकावतां । अर्घश्च मूल्यमानं मधुकोशकाश्चक्षौद्रोत्पत्तिस्थानानि, इत्यादिकान् साधयन्तीति वनचराणां पूर्वोक्तानां सर्वेषां । तथा यन्त्राणि-उच्चाटनाद्यनर्थाऽक्षरलेखकान् जलसङ्ग्रामादियन्त्राणि वा उदाहरन्तीति योगः, विषाणि स्थावरजङ्गमभेदानि मूलकर्म [ तत्प्रयोगतो ] गर्भघातनादिकं तथा मूलं अश्लेषादि जातकस्य स्नानादेः कर्म--मूलकर्मतत्प्रयोगतो गर्भघातनादि, आहेवणं-आक्षेपणं पुरक्षोभादिकरणं पाठान्तरे आहिव्वणं ति आहित्यं अहितभावं-शत्रुभावं अथवा पाठान्तरे अविंधणंति धनादीनां मन्त्रेणाऽऽवेशनं ग्रेहणं, आभियोग्यं-वशीकरणादि तच्च द्रव्यतो-द्रव्यसंयोगजनितं, भावतो विद्यामन्त्रादिजनितं बलात्कारेण वा मन्त्रौषधिप्रयोगान्नानाप्रयोजनेषु तद्व्यापाराणां करणं, चोरिकायाः परदारगमनस्य बहुपापस्य यावत्करणं तत्तथा तान् साधयन्तीति योगः । अवस्कन्दान् धाटीकरणानि बलमर्दनानि वा, ग्रामघातिनः प्रतीताः, वनदहनतडागभेदनानि प्रतीतानि, बुद्धेर्विषयस्य यानि विनाशनानि एतावता कुबुद्धिजनकपरिणामविशेषोत्पादकानि, वशीकरणप्रमुखानि, भयमरणक्लेशद्वेषजनकानि मृषावादकर्त्तुःरिति गम्यं ।

१ मधुपिंड इति लोकभाषा २ साहरोति भाषा

भावबहुसंकिलिट्ठमलिणाणि भूतघातोवघातियाइं ताइं हिंसकाइं वयणाइं उदाहरंति, पुट्ठा वा अपुट्ठा वा परतत्तियवावडा य असमिक्खियभासिणो उवदिसंति, सहसा उट्टा, गोणा, गवया दमंतु परिणयवया, अस्सा हत्थी गवेलगकुक्कुडा य किज्जंतु, किणावेध य विक्केह पयह य सयणस्स देह पियधय दासिदासभयकभाइल्लका, य सिस्सा य, पेसकजणो, कम्मकरा य, किंकरा य, एए सयणपरिजणो य कीस अच्छंति, भारिया भे करित्तु

भावेन—अध्यवसायेन बहुसंक्लिष्टेन मलिनानि–कलुषाणि यानि तानि तथा, भूतानां–प्राणिनां घातश्च–हननं उपघातश्च परम्पराघातः तौ विद्येते येषु तानि, असत्यानि [सत्यानि] द्रव्यतस्तानि यानि पूर्वमुपदर्शितानि हिंसकानि वचनानि उदाहरन्ति कथयन्ति, तथा [1]पृष्टा वा अपृष्टा वा, परेषां तप्तिर्निन्दा तया व्यापृत्ताः–व्यापारवन्तः परकृत्यचिन्तनाक्षणिका इत्यर्थः। अपर्यालोचितवक्तारः उपदिशन्ति–अनुशासति सहसा–अकस्मात् उष्ट्राः–करभाः गोणा—गावः—बलीवर्दाः गवया आटव्याः पशुविशेषाः दमन्तु–वशीकुर्वन्तु हन्यन्तां विनीयन्तां वा परिणतवयसः–संपन्नावस्थास्तरुणा इत्यर्थः। अश्वास्तुरगाः, हस्तिनो गजाः, गवेलकाः–उरभ्रमेषादयः, कुर्कटास्ताम्रचूडादयः, क्रीयन्तां–मूल्येन गृह्यन्तां क्रीणापयत अन्यान् मत्युपदेशेन, विक्रीणध्वं–विक्रेतव्यं, च पचत–पचनाय कर्त्तुं, स्वजनाय दत्त, पिबत च पातव्यं मदिरादि; वाचनान्तरे खादत पिबत दत्त पचत इत्यादि वाक्यानि। तथा दास्यः–चेटिका दासा भृतकाः—भक्तपानादिना पोषिताः, ये लाभस्य चतुर्थादिभागं लभन्ते ते भाइल्लकाः, शिष्याः–विनेयाः, प्रेष्याः–प्रयोजनेषु प्रेषणीयलोकाः, कर्मकराः–नियतकालं निर्देशकारिणः, कृतकार्यसमाप्तौ पुनः पुनः प्रश्न-

---

१ पूछया अणपूछया इति भाषा. २ सांढेति भाषा.

कम्मं गहणाइं वणाइं खेत्तखिलभूमिवल्लराइं उत्तणघणसंकडाइं डज्झंतु—सूडिज्जंतु य रुक्खा, भिज्जंतु जंतभंडाइयस्स उवहिस्स कारणाए बहुविहस्स य अट्ठाए उच्छू दुज्जंतु पीलिज्जंतु य तिला, पयावेह य इट्टकाउ, मम घरट्ठयाए खेत्ताइं कसह कसावेह य, लहुं गामआगरनगरखेडकब्बडे निवेसेह अडवीदेसेसु विपुलसीमे, पुप्फाणि य फलाणि य कंदमूलाइं कालपत्ताइं गेण्हेह, करेह संचयं परिजणट्ठयाए, साली वीही जवा य लुचंतु मलिज्जंतु कारिणः किङ्कराः एते पूर्वोक्ताः स्वजनपरिजनाश्च कस्मात् कारणात् आसने अवस्थानं कुर्वन्ति ' भार्या भे—भवतां कर्म—कृत्यं कृत्वा तत समाप्तौ यतो भारिका—दुर्निर्वाहः भवतां कुर्वन्तु । गहनानि—गह्वराणि वनानि—वनखण्डानि क्षेत्राणि—धान्यवपनभूमयः, खिलभूमयो हलैरकृष्टभूमयः वल्लराणि च—क्षेत्रविशेषास्तत उद्गतानि तृणानि उर्ध्वगततृणानि तैः अत्यर्थं घनानि अतएव सङ्कीर्णानि यानि तानि । दह्यन्तां अग्निना, सूद्यन्तां समारादिना, उन्मूल्यतां वृक्षा, भिद्यन्तां—छिद्यन्तां यन्त्राणि तिलेक्षुसर्षपैरण्डकादिकानां पोलणानि भाण्डानि—भाजनानि कुण्डादीनि भण्डी वा गन्त्री एतान्यादिर्यस्य तत्तथा, तस्य उपधेः उपकरणस्य 'कारणाएत्ति, कारणाय आह तथा बहुविधस्य च कार्यसमूहस्य अर्थाय तदर्थं इक्षुदण्डादि 'दुज्जंतु, दूयन्तां लूयन्तां धातुनामनेकार्थत्वात्, पीड्यन्तां च तिलाः, पाचयत इष्टिकाः मदीयगृहार्थं, तथा क्षेत्राणि कृषत कर्षयत तथा कार्षापयत—अन्येषामुपदेशदानतः, तथा लघु—शीघ्र ग्रामनगरे पूर्वोक्तशब्दार्थे कर्वटं—कुनगरं तानि निवेशयत स्थापयत, क्व ?—अटवीदेशेषु किंभूतानि ग्रामादीनि ? विपुला—विस्तीर्णा सीमा—मर्यादा भूमिर्येषु तानि, पुष्पाणि फलानि च पुनः कन्दा—भूमिस्था वृक्षावयवा, मूलानि भूम्यन्तर्गतानि तान्येव, अवसरप्राप्तानि गृह्णीत कुरुत तेषां संचयं परिजनाऽर्थं । शालिश्चतुष्पष्टिजातीयाः, कलमाद्याः व्रीहयः

उप्पणिज्जंतु य लहुं च पविसंतु य कोट्ठागारं, अप्पमहउक्कोसगा य हंमंतु, पोयसत्था सेणा णिज्जाउ, जाउ डमरं,
घोरा वट्टंतु य संगामा, पवहंतु य सगडवाहणाइं, उवणयणं चोलगं विवाहो जन्नो अमुगम्मि उ होउ दिवसेसु
करणेसु मुहुत्तेसु नक्खत्तेसु तिहिसु य, अज्ज होउ ण्हवणं मुदितं बहुखज्जपिज्जकलियं कोतुकं विण्हावणकं संति-

पाष्टिक्यादि भेदाः, जवास्सतुषगोधूमाः बहुविधास्तान् लूयन्तां छिद्यन्तां, केदारेषु मलयन्तां संन्यस्यतां–स्थाप्यतामितस्ततो वा, उत्पूयतां–उत्पादयतां वपनादिना, लघून् वृद्धान् कुर्वतां प्रविशतां–प्राविश्यतां कोष्ठागारेषु कोष्ठागारं प्रति वा, अल्पा–लघवो महान्तस्तदपेक्षया मध्यमाः, उत्कृष्टाः–उत्तमाश्च हन्यन्तां पोतसार्थाः–बोहित्थ–वाहणसमुदायाः। तथा सेना–सैन्यं कटकं निर्यातु–निर्गच्छतु निर्गत्य किं करोतु? डमरं विग्रहं विड्वरस्थानं तथा घोरा–रौद्राः जनक्षयकराः वर्त्तन्तां सङ्ग्रामा-युद्धानि। प्रवर्द्धयन्तु–प्रमर्दयन्तु शकटवाहनानि–यानपात्राणि च, तथा पुनः उपनयनं बालानां कलाग्रहणं, 'चोलगं'ति बालक-प्रथमशिरोमुण्डनं, विवाहं–पाणिग्रहणं, यज्ञो–यागः अमुष्मिन् दिवसे भवतु।[1] [बव १ बालव २ कौलव ३ तैतिल ४ गर ५ वणिज ६ विष्टि ७ सप्तचराणि शकुनि १ चतुष्पद २ नाग ३ किंस्तुघ्नानि ४ चत्वारि स्थिराणि एवं ११] करणं–बवादिकानामेकादशानामन्यतरदभिमतं मुहूर्त्ते रौद्रादीनां त्रिंशतामन्यतरेऽभिमते, नक्षत्रे–पुष्यादिकेऽभिमते, तिथौ पञ्चानां नन्दादीनामन्यतरस्यामभिमतायां, अद्य अस्मिन्नहनि भवतु स्नपनं–सौभाग्यपुत्राद्यर्थं वध्वादेर्मज्जनं, किंभूतं? मुदितं–प्रमोदवत्, बहु–प्रचुरं खाद्यं पेयं वा तेन कलितं–व्याप्तं प्रभूतमद्यमांसाद्युपेतं वा, कौतुकं–रक्षापोटलिका दवरकादिबन्धनं यत्र तत्, विविधैः मन्त्रमूलिभिः संस्कृतजलैः विस्नापनकं शांतिकर्म वा–अग्निकारिकादिकं वा यत्र तत्। ते कुरुत–निष्पादयत केषु इत्याह--

१ प्रत्यन्तरे नास्ति.

कम्माणि कुणह, ससिरविगहोवरागविसमेसु सज्जणपरियणस्स य नियकस्स य जीवियस्स परिरक्खणट्ठयाए पडिसीसकाइं च देह दह य सीसोवहारे विविहोसहिमज्जमंस-भक्खन्नपाण-मल्लाणुलेवण-पईवजलिउज्जल-सुगंधिधुवावकारपुप्फफलसमिद्धे पायच्छित्ते करेह, पाणाइवायकरणेणं बहुविहेणं विवरीउप्पाय-दुस्सुमिण-पावसउण-असोमग्गहचरिय-अमंगलनिमित्तपडिघायहेउं वित्तिच्छेयं करेह, मा देह किंचि दाणं, सुट्ठु हओ

शशिरव्यो--चन्द्रसूर्ययोर्ग्रहणराहुलक्षणेन उपराग--उपरञ्जनं ग्रहणमित्यर्थः, स च विषमाणि च-विधुराणि दुःस्वप्नाशिवादीनि तेषु, किमर्थं तत्कारणमित्याह--स्वजनस्य परिजनस्य निजकस्य च जीवितस्य परिरक्षणार्थाय ये ते सर्वे स्वरक्षणार्थं कुर्वन्तु इति योगः। प्रतिशीर्षकाणि- दत्तस्वशिरःप्रतिरूपाणि पिष्टादिमयशिरांसि यच्छत आत्माशिरोरक्षणार्थं चण्डिभ्य इत्यर्थः, तथा दत्त शीर्षोपहारान्--पश्वादिशिरोबलीन् देवानामिति अध्याहारः। विविधौषधिमद्यमांसभक्ष्यान्नपानमाल्यानुलेपनसुगन्धधूपादि दीपाश्च ज्वलितोज्ज्वलाश्च--आरात्रिकाद्याः याः सुगन्धिधूपस्य--दशांगादेश्चापकारकरणं अंगारोपरिक्षेपेण पुष्पफलैः समृद्धाः --संपूर्णा ये शीर्षोपहारास्ते तथा तान्, दत्त इति वदन्ति। प्रायश्चित्तानि--दूरितोपशमानि कुरुत, केन कृत्वा ? प्राणातिपातकरणेन जीवघातकरणेन किंभूतेन ? नानाप्रकारेण कृत्वा, किमर्थं ? तत्करणमित्याह ? विपरीतोत्पाताः अशुभाः अशुभश्रवकाः प्रकृति-विकाराः दुःस्वप्नाः--रात्रौ दुःस्वप्नमृतकादिदर्शनाश्चापशकुनाः प्रतीताः, असौम्यग्रहचरितं--क्रूरग्रहचारः वक्रातिचारादयः, अन्यान्यपि यानि अमङ्गलानि निमित्तानि अङ्गस्फुरितानि इत्यादीनां प्रतिघातहेतोरुपहननार्थं, तथा वृत्तिच्छेदं आजीविकाभङ्गं कुरुत मा दत्त--किंचिद्दानमिति अन्येभ्य इति गम्यं, सुष्ठु हत हत संभ्रमात् द्वित्ववचनं, सुष्ठु च्छिन्नो भिन्नश्च अविवक्षितः कश्चिदिति

सुट्ठु हओ, सुट्ठु छिन्नो भिन्नत्ति उवदिसंता एवंविहं करेंति, अलियं मणेण वायाए कम्मुणा य अकुसला अणज्जा अलियाणा अलियधम्मणिरया, अलियासु कहासु अभिरमंता, तुट्ठा अलियं करेत्तु होंति य बहुप्पयारं (सू० ७)

तस्स य अलियस्स फलविवागं अयाणमाणा वड्ढेंति, महब्भयं अविस्सामवेयणं दीहकालं बहुदुक्खसंकडं नरयतिरियजोणिं, तेण य अलिएण समणुबद्धा आइद्धा पुणब्भवंधकारे भमंति भीमे दुग्गतिवसहिमुवगया, एवं उपदिशन्तः, एवंविधं नानाप्रकारं त्रिविधं--त्रिप्रकारं ता कुर्वन्ति अलीकं--मृषाभाषणं सत्त्वोपघातहेतुतया भावतोऽलीकं तत्र त्रैविध्यमाह—

मनसा वाचा 'कम्मुणा य'त्तिकायक्रियया ये कुर्वन्ति तानाऽऽह—व्यक्तव्याऽव्यक्तव्यविभागाऽनिपुणाः अकुशलाः, अनार्याः—पापकर्मणि चरन्तः, अलीका आज्ञा आगमो येषां ते अलीकाज्ञाः, अत एव अलीकधर्मनिरताः, अलिकासु—आत्मगुणहानिकारिकासु कथासु—वाक्प्रपञ्चेषु अभिरममाणाः—चित्तं प्रीणमाणाः, अत एव तुष्टा हृष्टहृदया अलीकं कुर्वन्तु भवन्ति च तत् कृत्वा बहुप्रकारं किं प्राप्नुवंति इति अक्षरघटनिका उक्ता । अथाऽलीकविपाकं प्रतिपादयन्नाह—

तस्य द्वितीयाश्रवस्य मृषावादनाम्नः फलस्य—कर्मणो विपाकः—उदयः साध्यमित्यर्थः, तं प्रति स्त्रां अजानमानाः—अजानाना वर्द्धयन्ति—वृद्धिं कुर्वन्ति, अर्थात् संसारे—चतुर्गतिरूपे महाभयां जन्ममृत्युलक्षणां अविश्रामं—वेदनां—दुःखादीनां दीर्घकालं बहुदुःखसंकुलां प्रभुतसमयपल्यसागरप्रमाणां नारकतिर्यग्योनिसंख्याऽसंख्याऽनन्तकालप्रमाणां तत्र उत्पत्तिरूपां । तेन अलीकेन—मृषावादेन तज्जनितकर्मणा समनुबद्धा—अविरहिताः आदिग्धाः—आलिंगिताः सन्तः पुनर्भवः—पुनर्पुनर्जन्म तद्रूपान्धकारे

ते य दीसंतिह दुग्गया, दुरंता, परवस्सा, अत्थभोगपरिवज्जिया, असुहिता, फुडियच्छविबीभच्छविवन्ना, -खरफरुसविरत्तज्झामज्झुसिरा, निच्छाया, लल्लविफलवाया, असक्कतमसक्कया, अगंधा, अचेयणा, दुभगा, अकंता, काकस्सरा, हीणभिन्नघोसा, विहिंसा, जडबहिरमूया य मम्मणा, अकंतविकयकरणा, णीया णीयजणनिसेविणो

भ्रमन्ति-भ्राम्यन्ति, भीमे रौद्रे भयंकरे दुर्गतिवसतिमुपगताः प्राप्ताः सन्तः ते प्राणिन इह-जीवलोके दृश्यन्ते कीदृशाः ?

दुःस्था-दुर्गताः दरिद्राः, दुरन्ताः दुःपर्यवसानसंसारपारं न प्राप्ताः,परवशाः-पराधीनाः, अर्थो-द्रव्यं भोगो-अशनादि अर्थादुपभोगः स्त्रीगृहादि तैः परिवर्जिताः-रहिताः, अविद्यमानसुखाः अथवा अविद्यमानसुहृदः, स्फुटितच्छवि-विपादिकाविचर्चिकादिभिर्विकृतत्वचः, बीभत्सा-विकृतरूपाः, विच्छायवदनाः विवर्णाः-विरूपरूपाः, खरः-कठिनः स्पर्शो येषां ते, क्वचिदपि स्थाने विगतरतयः अतएव ध्यामाः-अभासुरकान्तयः, अशुषिराः असारकायाः, निःच्छायाः गतप्रभाः, लल्ला-अव्यक्ता निःफलवाचः अनादेयकृत्याः, न विद्यते संस्कृतं-संस्कारो येषां ते असंस्कृताः अनादरणीया जनैरिति शेषः, संस्कृतभाषावर्जिताः, असत्कृताः अविद्यमानसत्काराः, अतएव अमनोज्ञगन्धाः, अचेतना-विशिष्टचेतनाऽभावात्, दौर्भाग्यत्वेन दुर्भगाः, अकान्ता अमनोज्ञाः, काकस्येव खरो स्पर्शो येषां ते काकस्वराः, हीनो-ह्रस्वो भिन्नो घुर्घुरोः घोषः-स्वरो येषां ते, अतएव विशेषेण हिंस्यन्ते जनैरिति विहिंसाः, जडाः-मूर्खाः, बधिराः-अकर्णाः, मूकाः-वाग्हीनाः, मन्मनाः-अव्यक्तवाचः, अमनोज्ञानि विकृतानि करणानि-इन्द्रियाणि येषां ते एवं सर्वपदेषु कर्मधारयसमासः, नीचाः जात्यादिभिः, नीचजातिकुलगोत्रकृत्यादिभिस्तादृशा ये जनाः पामरास्तान् प्रतिसेवन्ते

१ जडबहिरन्धया य मम्मणा मुद्रितप्रतौ २ पामस्या फोडा इति भाषा. २ व्याउ इति भाषा. ३ अलहु हेवान भाषा.

लोगगरहणिज्जा, भिच्चा असरिसजणस्स पेस्सा, दुम्मेहा, लोकवेदअज्झप्पसमयसुतिवज्जिया, नरा धम्मबुद्धिविकला। अलिएण य तेणं पडज्झमाणा असंतएण य अवमाणण–पिट्ठिमंसाहिक्खेव–पिसुण–भेयण–गुरुबंधवसयण–मित्तवक्खारणादियाइं अब्भक्खाणाइं बहुविहाइं पावेंति, अमणोरमाइं हिययमणदूमकाइं जावज्जीवं दुरुद्धराइं अणिट्ठखरफरुसवयण–तज्जणनिब्भच्छणदीणवदणविमणा कुभोयणा, कुवाससा, कुवसहीसु किलिस्संता नेव

इति नीचजननिषेविणोऽतएव लोकगर्हणीयाः निन्दनयोग्याः, भृत्याः अवश्यं परैर्भर्त्तव्याः, असमानशीललोकस्य प्रेष्याः–आदेशकारकाः तथा द्वेष्याः–द्वेषस्थानं वा, दुर्मेधसो–दुर्बुद्धयः, लोकाभिमतं शास्त्रं भारतादि वेदा–ऋग्–यजुः सामादि, अध्यात्मश्रुतिः–चित्तजयोपायप्रतिपादनशास्त्रं समयश्रुतिः–अर्हतां प्रवचनादिभिर्वर्जिताः–रहिताः एतादृशाः के ? इत्याह—

नरा–मनुष्याः धर्मः सम्यग्धर्मादिः बुद्धि–र्ज्ञानता तया विकलाः अलीकेन च–अलीकवादजनितकर्माग्निना तेन–कालान्तरकृतेन दह्यमानाः, अनुपशान्तेन तेन असता वा–रागादिप्रवर्त्तनेन अपमानादि प्राप्नुवन्ति। तत्राऽपमानं–मानभङ्गः, पृष्टिमांसं परोक्षे दोषाविर्भावनं, अधिक्षेपो–धिक्कारनिन्दाविशेषः, पिशुनैः खलैर्भेदनं, प्रेमसम्बन्धस्य छेदनं, गुरुः–पूज्यपक्षः, बान्धवा–भ्रात्रादिस्नेहस्थानं, स्वजनं–सम्बन्धीवर्गः, मित्रं–प्रेमस्थानं एतेषां क्षारायमाणवचनेन पराभवं एतानि आदिर्येषां तानि तदादिकानि, अभ्याख्यानानि–असद्दूषणाभिधानानि बहुप्रकाराणि लभन्ते प्राप्नुवन्ति। तानि कीदृशानि ? अमनोरमाणि–असमीचीनानि, हृदयमनसोश्च दुमगानि परितापकारीणि यानि तानि, जन्ममर्यादीकृत्य दुःखेन उद्धरणीयानीत्यर्थः। अनिष्टेन–असुखकारिणा कठोरेण वचनेन यत्तर्जनं रे दास! पुरुषेण भवितव्यमित्यादिरूपेण यत् निर्भर्त्सनं–अरे! दुष्टकर्मकारिन्! अपसर दृष्टिपथादि-

सुहं नेव निव्वुइं उवलभंति अच्चंतविपुलदुक्खसयसंपउत्ता ॥

एसो सो अलियवयणस्स फलविवाओ इहलोइओ, परलोइओ, अप्पसुहो, बहुदुक्खो, महब्भओ, बहुरयप्पगाढो, दारुणो, कक्कसो, असाओ वाससहस्सेहिं मुच्चइ, न य अवेदयित्ता अत्थि हु मोक्खोत्ति, एवमाहंसु नायकुलनंदणो महप्पा जिणो उ वीरवरनामधेज्जो कहेसी य अलियवयणस्स फलविवागं, एयं तं बितीयंपि अलियवयणं लहुसग–लहुचवलभणियं, भयंकरं, दुहकरं, अयसकरं,वेरकरगं, अरतिरतिरागदोसमणसंकिलेसवियरणं, अलियणियडिसादिजोगबहुलं. नीयजणनिसेवियं, [1]निसेसं, अप्पच्चयकारकं, परमसाहुगरहणिज्जं, पत्यादिरूपं ताभ्यां दीनवदनं विमनं–विगतं चेतो येषां ते तथा। तत एव अभोजनाः–कुभोजनाः, कुवाससः, कुवसतिषु–कुत्सितस्थानेषु क्लिश्यन्ते–बाधन्ते, नैव सुखं शारीरं नैव निर्वृत्तिः–मनःस्वास्थ्यं उपलभन्ते प्राप्नुवन्ति, अत्यन्तं विपुलं–विस्तीर्णं यत् दुःखं सुखविपर्ययस्तेषां शतं तेन संप्रयुक्ताः तद्वन्तः, एतावत् कालं अलीकस्य फलमुक्तं। एषः प्रथमद्वारवत् अधिकृतः–प्रस्तुतः द्वितीय अलीकवचनस्य फलविपाकः प्रथमाध्ययनशब्दार्थवत् व्याख्यातव्यः। इह लौकिकः, पारलौकिकः, फलप्रतिपादकः, अल्पसुखः, बहुदुःखः, महद्भयः, बहुरजोभिः व्याप्तः, दारुणः, कर्कशः, असातकारी, वर्षशतसहस्रैर्मुच्यते। नाऽपि चाऽवेदयित्वा मोक्षो अस्तीति शेषः, एवमाख्यातवान् ज्ञातकुलनन्दनः महात्मा जिनः महावीर इति प्रधाननामधेयः कथितवान् अलीकवचनस्य फलविपाकं, एतत् द्वितीयमपि अलीकवचनं लघुस्वकं–लघुगुणमित्यर्थः लघुचपलभणितं, भयकृत्, दुःखकृत्, अयशःकारकं, वैरकारकं, अरतिः रतिः रागो–द्वेषः मनः–संक्लेशदायकं अलीकं–अलीकं–मृषाभाषणं निकृतिर्मायामयं तद्योगप्रचूरं, नीचजनसेवितं,

[1] संपलिसा मुद्रितप्रतौ [2] निस्ससं

रपीलाकारकं परमकण्हलेससहियं, दुग्गतिविनिवायवड्ढणं, पुणब्भवकरं, चिरपरिचियमणागयं, दुरुत्तं बितियं अधम्मदारं समत्तं ॥ २ ॥ ( सू० ८ )

निश्चयादेव समस्तभावेन, अप्रत्ययकारकं, प्रधानसाधुजनगर्हणीयं, परेषां पीडाकारकं, परमकृष्णलेश्यासहितं, दुर्गतिविनिपात-वर्द्धनं, पुनःपुनर्भवकारणं, चिरपरिचितं, अनागतं दुरन्तं द्वितीयं अधर्मद्वारं सम्पूर्णतां प्राप्तं। एते सर्वेऽपि शब्दार्थाः पूर्वे व्याख्याताःसन्ति ततोऽवसेयमिति शब्दः—समाप्तौ, ब्रवीमीति कथयामि तीर्थङ्करोपदेशेन नतु स्वबुद्ध्येति ज्ञेयं । इति ॥

॥ दशमोपाङ्गस्य प्रश्नव्याकरणनामरूपस्य द्वितीयाश्रवस्य विवरणमेतल्लिखितम् समासेन ॥

# ॥ इति द्वितीयं द्वारम् समाप्तम् ॥

१ मणुगयं मु० प्र०

# अथ तृतीयं अध्ययनम्

व्याख्यातं द्वितीयमध्ययनं साम्प्रतं तृतीयमारभ्यते—

अस्य चाऽयमभिसम्बन्धः, इह द्वितीयाऽध्ययने अलीकमृषावादाश्रवद्वारमुक्तं, अदत्तग्राहिणः प्रायेण अलीकं जल्पन्तीत्यनेन सम्बन्धेनाऽऽयातस्य तृतीयाध्ययनस्येदमाऽऽदिसूत्रम्—

जंबू तइयं चेत्यादिरूपं, तत्राऽदत्तं चतुर्द्धा—स्वामि १ जीव २ तीर्थंकर ३ गुरु ४ अदत्तभेदात्, तत्र चतुर्विधमपि साधूनां त्याज्यमेवेति, ग्रहणं-धारणीयं द्रव्यमाश्रित्य, क्षेत्रतः सर्वलोकमाश्रित्य, कालतो दिवारात्राविति, भावतो रागद्वेषाभ्यामिति, षोडशकं स्वपरसेवनोपदेशैस्सह विंशतिधा भवतीति त्याज्यमेवेति दिक् ।

अथ यथा पूर्वाध्ययनयोर्यादृशं यन्नामादिभिः पञ्चभिर्द्वारैरध्ययनार्थप्ररूपणा कृता एवमिहाऽपि करिष्यते, तत्र यादृश-मदत्तादानं स्वरूपेण तत्प्रतिपादयंस्तावदाऽऽह—

जंबू ! तइयं च अदत्तादाणं हरदहमरणभयकलुसतासण-परसंतिगऽभेज्जलोभमूलं, कालविसमसंसियं, अहोऽच्छिन्नतण्हपत्थाणपत्थोइमइयं, अकित्तिकरणं, अणज्जं, छिद्दमंतर-विधुर-वसण-मग्गण-उस्सव-मत्तप्पमत्त-पसुत्तवंचण-क्खिवण-घायणपरा-णिहुयपरिणाम-तक्करजणबहुमयं, अकलुणरायपुरिसरक्खियं, सया

हे जम्बू ! तृतीयं अदत्तस्य धनादेः आदानं-ग्रहणं अदत्तादानं तृतीयं आश्रवं । हर दह इत्येतौ शब्दौ हरणदहनपर्यायौ, कीदृशं तत् अदत्तादानं ? मरणं-मृत्युः भयं-भीतिः कलुषं पातकं तेन त्रासनं-त्रसनजननस्वरूपं, पुनः कीदृशं ? परसत्कं परकीयं यत् धनं तत्र योऽभिध्या-लोभः रौद्रध्यानाऽन्विता मूर्च्छा स एव मूलं-निबन्धनं-कारणं यत्र तत् । पुनः कीदृशं ? कालश्चार्द्ध-रात्रादि विषमं च-पर्वतादि दुर्गं तैः संश्रितं-आश्रितं यत्तत्तथा, ते हि प्रायः अदत्तादानग्राहकैः आश्रीयते, पुनः कीदृशं ? अधो-अधोगतिः केषां ? अच्छिन्नतृष्णानां-अत्रुटितवाञ्छानां यत्प्रस्थानं-यात्रा तत्र प्रस्ताविका-प्रवर्त्तिका मतिः-बुद्धिर्यस्मिंस्तत् । पुनः कीदृशं ? अकीर्त्तिकरणं-अपयशःकारी, अतएव अनार्यं-आर्यपुरुषैरनाचरणीयं । पुनः कीदृशं ? छिद्रं-प्रवेशद्वारं नरकस्येति गम्यं, अन्तरं-अवसरोऽनर्थस्येति ज्ञेयं, विधुरं-अपायो, व्यसनं-राजादिकृताऽऽपत् एतेषां मार्गणं-गवेषणं तस्य उत्सवः महोदिनं, तेषु मत्तः-क्षिबो मद्यादिना, प्रमत्तः इन्द्रियादिभिः प्रसुप्तो निद्राशीलः तेषां वञ्चनं-प्रतारणं । पुनः कीदृशं ? आक्षेपणं चित्तव्यग्रतापादनं घातनं-मारणं तेषां तत्परः-एतन्निष्ठः अनिभृतोऽनिश्चलो योऽसौ परिणामश्चित्तव्यापारो यस्याऽसौ मत्तप्रमत्तप्रसुप्तवचनाक्षेपण-घातनपराऽनिभृतपरिणामः तादृशो यस्तस्करजनश्चौरलोकः तस्य बहुमतं मान्यं अदत्तादानं । पाठान्तरे त्विदमेवं पठ्यते-छिद्रविषमपापकं च-[ नित्यं छिद्रविषमयोः सम्बन्धीदं पापमित्यर्थः, अन्यदा हि तत्पापं प्रकर्त्तुमशक्यमिति भावः]-अनिभृतपरि-

साहुगरहणिज्जं, पियजणमित्तजणभेदविप्पीतिकारकं, रागदोसबहुलं, पुणो य उप्पूरसमरसंगामडमरकलिकल-हवेहकरणं, दुग्गइविणिवायवड्ढणं, भवपुणब्भवकरं, चिरपरिचितमणुगयं, दुरंतं तइयं अधम्मदारं (सू० ९)

तस्स य णामाणि गोन्नाणि होंति तीसं, तं जहा—चोरिक्कं १ परहडं २ अदत्तं ३ कूरिकडं ४ परलाभो ५

णामसंकिट्ठं। पुनः कीदृशं ? अकरुणा–निर्दया ये राजपुरुषाः–राजनियोगिनस्तैरक्षितं[1] तैर्निवारितमित्यर्थः, सदा–सर्वदा नित्य-कालं साधुभिः सज्जनजनैः गर्हणीयं निन्दनीयमित्यर्थः, प्रियजनमित्रजनानां भेदं–वियोजनं विप्रीतिकारकं–विप्रियकरणशीलं, रागद्वेषबहुलं पुनः कीदृशं ? उत्पूरेण–प्राचुर्येण समरो–जनमारकयुक्तो यः सङ्ग्रामः–समरो–रणः, डमरः–विड्वरः स्वपरचक्र-जन्यभयं, कलिः–स्वपक्षराटिः, कलहो–वाक्प्रपञ्चः, वेधः–पश्चात्तापादिकः एतेषां रणादिवेधान्तानां करणं–कारकं। दुर्गतिवि-निपातनिवर्द्धनं, भवे–संसारे पुनः पुनर्भवान् करोतीति भवपुनर्भवकरं, चिरपरिचितं–अनादिसेवितं, अनुगतं–अव्यवच्छिन्नतया अत्रुटितप्रवाहरूपत्वात् क्रियारूपतः, दुरन्तं–दुष्टावसानं विपाकदारुणत्वात् तृतीयं अधर्मद्वारं पापोपायं।

तस्य–अदत्तादानस्य इमानि वक्ष्यमाणानि नामानि–अभिधानानि गोण्णाणि–गुणनिष्पन्नानि भवन्ति त्रिंशत् तद्यथा तद्द-र्शयति–चौरः चर्यते चोरणं चौरिका तद्भावश्चौरिक्यं १। परस्मात् सकाशात् ह्रियते तत्परहृतं २। न केनाऽपि प्रदीयते इति अदत्तं ३। क्रूरं–चित्तं येषां ते क्रूरिणः तैः कृतं क्रूरिकडं क्रूरकृतं ४ क्वचित् कुरुड्डकमिति दृश्यते तत्र कुरुड्डकाः–काङ्कटकबीज-मायाः सद्गुणानामयोग्या इत्यर्थः। परस्य द्रव्यस्य लाभः परलाभः ५। असंयमः–असंवररूपत्वात् ६। परधने गृद्धिः इहा ७।

[1] रक्षितं

**असंजमो ६ परधणंमि गेही ७ लोलिक्कं ८ तक्करत्तणंति य ९ अवहारो १० हत्थलहुत्तणं ११ पावकम्मकरणं १२ तेणिक्कं १३ हरणविप्पणासो १४ आदियणा १५ लुंपणा धणाणं १६ अप्पचओ १७ अवीलो १८ अक्खेवो १९ खेवो २० विक्खेवो २१ कूडया २२ कुलमसी य २३ कंखा २४ लालप्पणपत्थणा य २५ आससणाय वसणं २६ इच्छामुच्छा य २७ तण्हागेहि २८ नियडिकम्मं २९ अपरच्छंतिविय ३० तस्स एयाणि एव-**

लौल्यं—८। तस्करत्वं नित्यं तत्करणाशयत्वात् ९ अपहारः—परधनस्येति गम्यं १० परधनहरणेन कुत्सितो हस्तो यस्याऽस्तीति तद्भावो हस्तलघुत्वं ११ पापकर्मणः करणं १२ स्तैन्यं तस्करस्यैव कर्म १३ हरणेन—परद्रव्यहरणेन विप्रणाशो भवति १४ आदानं परधनस्येति गम्यं १५ लोपना—अवच्छेदनं अर्थात् परधनस्य शुभाशयस्य वा १६। अप्रत्ययः—अविश्वास जनकत्वात् १७ परेषां अवपीडनं इति अवपीड १८ आक्षेपः परधनस्येति गम्यं १९ क्षेपः परहस्तात् द्रव्यस्य प्रेरणं २० विक्षेपः—विशेषेण तदेव २१ कूटतुलादीनां अन्यथाकरणं २२ कुले मालिन्यहेतुत्वात् मषिः २३ कांक्षा परद्रव्यस्येति गम्यं २४ लालपनं गर्हितालापः प्रार्थना चाटुकारः दीनभाषणशीलः २५ आशसनाय—विनाशनाय व्यसनं—व्यसनहेतुत्वात् व्यसनं २६। इच्छा च—परधनं प्रत्यभिलाषा मूर्च्छा—तत्रैव गाढाऽभिष्वंगरूपा तद्धेतुत्वाददत्तग्रहणं २७ तृष्णा—प्राप्तद्रव्यस्याऽव्ययेच्छा गृद्धिश्चाऽप्राप्तस्य प्राप्तिवाञ्छा २८ निकृतेर्मायायाः कर्म निकृतिकर्म २९ अविद्यमानानि परेषामक्षीणि दृष्टव्यतया यत्र तदपरोक्षं—अप्रत्यक्षं सर्वेषामित्यर्थः ३०। यस्य स्वरूपं प्राग्वर्णितं तस्याऽदत्तादानस्य एतानि इत्यादिकानि नामधेयानीत्यर्थः भवन्ति त्रिंशत् अदत्तादानस्य? पापेन—अपूण्य

---

१ लालचीओ इति लोकभाषा

मादीणि नामधेज्जाणि होंनि तीसं अदिन्नादाणस्स पावकलिकलुसकम्मबहुलस्स अणेगाइं ( सू० १० )

तं पुण करेंति चोरियं तक्करा परदव्वहरा, छेया, कयकरणलद्धलक्खा, साहसिया, लहुस्सगा, अतिमेहिं-त्था, लोभगत्था, दद्दरओवीलका, य गेहिया, अहिमरा, अणभंजका भग्गसंधिया, रायदुट्ठकारी य विसय-निच्छूढलोकवज्झा, उद्दोहक-गामघायक-पुरघायग-पंथघायग-आलीवगतित्थभेया, लहुहत्थसंपउत्ता, जूइकरा, कर्मरूपेण कलिना-युद्धेन कलुपाणि-अतिमलीमसानि कर्माणि-मित्रद्रोहादिव्यापाररूपाणि तैर्बहुलानि-बहूनि यत्र तत्तथा तस्य अनेकानि कुर्वन्ति ।

अथ येऽदत्तादानं कुर्वन्ति तानाऽऽह—

तत्पुनः कुर्वन्ति चौर्य-चौरिकां तस्कराः-चौराः, परेषां द्रव्यं हरन्ति ते परद्रव्यहराः, छेका-निपुणास्तत्कार्ये, कृतकरणाः-वारंवारं विहितचौरानुष्ठानाः ते च ते लब्धलक्षाः-अवसरज्ञा साहसिकाः-धैर्यवन्तः परद्रव्याऽऽहरणे, लघुस्वकाः तुच्छात्मानः, अतिमहेच्छा-उदारवन्तः तत्करणे, लोभग्रस्ताः, दर्दरेण-वचनाटोपेन आत्मानं अपव्रीडयन्ति-गोपायन्ते आत्मस्वरूपं येषां ते परं विलज्जीकुर्वन्ति, मुष्णन्ति हि शठात्मानः तथाविधवचनेन परं वञ्चयन्ति-गृद्धिकाः, संमुखागतं परं मारयन्ति ते अभिमराः, ऋणं-देयं द्रव्यं भञ्जन्ति ते, भग्नाः सन्धयो यैस्ते, राज्ञा दुष्टं काशहरणादिकं कुर्वन्ति ते राजदुष्टकारिणः, विषयात्-मण्डलात् निर्व्यूढा-निर्घाटिता अतएव लोकैर्बाह्यीकृताः जनबहिष्कृताः। उद्दाहकारका-घातकारकाः अथवा उद्दहकाः-अटव्यादाहकाः ग्राम

१ महिच्छ० मु० प्र० २ अणभंजक मु० प्र० ३ देवालोया इति भाषा ४ वोलदेइ पतलें इति लोकभाषा

खंडरक्ख-त्थीचोर-पुरिसचोर-संधिच्छेया य, गंथिभेदग-परधणहरणलोमावहारा अक्खेवी हडकारका, निम्मद्दग-गूढचोरक-गोचोरग-अस्सचोरग-दासिचोरा य, एकचोरा, ओकड्ढक-संपदायक-उच्छिंपक-सत्थघायक-बिलचोरी ( कोली ) कारका, य निग्गाहविप्पलुंपगा, बहुविहतेणिक्कहरणबुद्धी, एते अन्ने य एवमादी घातकाः, पुरघातकाः '[2]पंथघातकाः' आदीपकाः-गृहादिज्वालकाः, [3]तीर्थभेदकाः यात्रिकलोकानां धनं मुष्णन्ति । लघुहस्तेन लाघवेन संप्रयुक्ताः, [4]द्यूतकराः, [5]खण्डरक्षाकराः शुल्कपालाः कोट्टपाला वा,स्त्रियः सकाशात् स्त्रीनेव वा चोरयन्ति स्त्रीरूपा वा चौराः स्त्रीचौराः एवं पुरुषचौरिकाः, सन्धिछेदाश्च-खात्रखनकाः, ग्रन्थिभेदकाः, परधनं अपहरन्ति ते परधनहराः, लोमान्येव अपहरन्ति ये लोमापहाराः निःशूकतयाऽपि भयेन परप्राणान् विनाश्य पश्चात् मुष्णन्ति ते [6]लोमापहाराः, आक्षेपेण-बलात्कारेण मुष्णन्ति ते आक्षेपिणः, हठं कृत्वा मुष्णन्ति ते हठकारकाः, नितरां अतिशयेन मर्दयन्ति ते निर्म्मर्दकाः, गूढं-गुप्तं चोरयन्ति ते गूढचौराः-प्रच्छन्नचौराः, गौर्गावो बलीवर्दास्तेषां चौराः, अश्वाः-घोटकास्तेषां चौराः, दास्यश्चेटिकास्तासां चौराः दासीचौराः, एकाकिनः सन्तो चौरिकां कुर्वन्ति ते एकचौराः, उत्कृता अपकर्षकाः ये गृहाद् ग्रहणं-निष्काशयन्नि अथवा चौरानाकार्य.परगृहाणि मोषयन्ति, ये चौराणां भक्तादि प्रयच्छन्ति ते संप्रदायिका, [7]अवछिंपकाश्चौरविशेषाः, सार्थान् घातयन्ति लुण्टन्ति ते सार्थघातकाः, बिलकोलीकारकाः-लोकव्यामोहकारिणः विश्वासवचनवादिनो चोरीकारकाः। निर्ग्राहा-राजादिना

---

१ हार मु० प्र० २ वाटपाडा इति लोकभाषा ३ तीर्थ करतां धन मांगैं अथवा रुंधो रहइ इति लोकभाषा ४ जूवटीया इति भाषा ५ दाणी इति लोकभाषा ६ फांसीया इति लोकभाषा. ७ मींणामणका भोल इति भाषा.

परस्स दव्वाहिं जे अविरया। विपुलबलपरिग्गहा य बहवे रायाणो [ परधणंमि गिद्धा, सए व दव्वे असंतुट्ठा, परविसए अहिहणंति ते लुद्धा ] परधणस्स कज्जे चउरंगविभत्तबलसमग्गा, निच्छियवरजोहजुद्ध-सद्धिय-अहमहमितिदप्पिएहिं सेन्नेहिं संपरिवुडा, पैत्तसगडसूइचक्कसागरगरुलवूहातिएहिं अणिएहिं उत्थरंता, अभिभूय हरंति परधणाइं ॥

ग्रहीता अवगृहीता वा, विप्रलुंपकाः व्यापारसूपकाः, बहुप्रकारं यत् स्तैन्यं–चौर्यं तेन यत् परधनस्य हरणं तदेव बुद्धिर्येषां ते, तथा मान–माप–तोलकूटकरणेन परधनं गृह्णन्ति एते सर्वे पूर्वोक्ताः अन्ये च एतेभ्यः सकाशात् एवं प्रकारं अदत्तादानमाददते परेषां द्रव्यः परधनग्रहणे ये अविरता–अनिवृत्ताः। अधुना ते एव यद्वा तत्कुर्वन्ति तदुच्यते–

विपुलं बलं–सामर्थ्यं परिग्रहश्च परिवारो येषां ते, बहवो राजानः परधनगृद्धाः, इदं अधिकं पदत्रयं पाठान्तरे सए अ दव्वे असंतुद्धा–स्वके द्रव्ये असंतुष्टाः असंतोषिणः, परधणे लुद्धा देसाणभिहणन्ति परदेशान् अभिघ्नन्ति लुब्धाः धनस्य कार्ये इत्यर्थः। चतुर्भिरङ्गैर्विभक्तं गज १ रथ २ अश्व ३ पदाति ४ लक्षणैः समासं यद्बलं तेन समग्रा युक्ता ये ते तथा, विनिश्चितैर्निश्चयवद्भिर्वरयोधैः सह यत् युद्धं–संग्रामस्तत्र श्रद्धा येषां ते च ते, अहमहमित्येवं दर्पिताश्च दर्पवन्तः एवंविधैः सैन्यैः भृत्यैः पदातिभिः तैः संपरिवृताः समेताः। तथा पत्राणि वाहनानि शकटानि, शूचि शूच्याकाराणि, चक्राणि, सागरः–समुद्रः, गरुडाकारा ये व्यूहाः सेनानिवेशाः तैः, पद्माकारो व्यूहः–परेषामनभिभवनीयः सैन्यविन्यासविशेषः एवमन्येऽपि एतैरपि अनीकैः अथवा गोमूत्रिकादीनां व्यूहैः तैः कृत्वा उत्थरन्तः आच्छादयन्तः परानीकानीति गम्यं। अभिभूय–जित्वा तान्येव परधनानि हरन्तीति व्यक्तं।

१ पउम मु० प्र०

अवरे रणसीसलद्धलक्खा संगामंमि अतिवयंति, सन्नद्धबद्धपरियरउप्पीलिय–चिंधपट्टगहियाउहपहरणा, माढिवरवम्मगुंडिया, आविद्धजालिका, कवयकंकडइया ॥ उरसिरमुहबद्ध–कंठतोणमाइतवरफलह–रचितपहकरसरहसखरचावकरकरंछिय–सुनिसितसरवरिस–चडकरकमुयंत–घणचंडवेगधारानिवायमग्गे, अणेगधणुमंडल-

अपरे राजानः रणशीर्षे–सङ्ग्रामशिरसि लब्धलक्षा लब्धजयवादाः सङ्ग्राममिति द्वितीया सप्तम्यर्थे, एतावता स्वयमेव सङ्ग्रामे अभिप्रवेशन्ति केवलं सैन्यमेव न योधयन्ति किन्तु स्वयमेव प्रविशन्ति. कीदृशाः सन्तः ? सन्नद्धाः–सज्जीभूताः बद्धाः–शरीरेण सह परिकवचाः सन्नाहा यैस्ते तथाभूतास्सन्तः उत्पीडितो–गाढं बद्धचिन्हपट्टो यैस्ते तथाभूताः, पुनर्गृहीतानि आयुधानि–शस्त्राणि खेटकादीनि परेषां हननार्थं आत्मरक्षार्थं च यानि आयुधानि प्रहरणान्युच्यन्ते यैस्ते, माढी–तनुत्राणविशेषः तेन वरवर्मणा प्रधानसन्नाहेन गुंडिताः–परिवारिताः, पाठान्तरे मेढिगुडवम्म इति तत्र गुड–कुंजरसन्नाह इति ज्ञेयं। पुनः कीदृशाः ? आविद्धानि–परिहितानि जालिकानि लोहकटका यैस्ते, कवचस्य तनुत्राणस्य कंकटिका–लोहकीलकाः कण्टकिताः–कृतकवचा ये ते। उरसा हृदयेन शिरसा मुखेन बद्धाः–यन्त्रिताः कंठे तोणा–तूणीराः यैस्ते, तथा हस्ते पाशितानि गृहीतानि वरफलकानि खेटकानि यैस्ते, तेषां रचितो–रणोचितरचनाविशेषेण परप्रयुक्तप्रहरणप्रतिघातनाय कृतः पहकरत्ति समुदायो यैस्ते, ततो सरभसैः–सहर्षैः निष्ठुरः खरः कोदण्डहस्तैः–धानुष्कैरित्यर्थः तेषां ये कराः हस्तास्तेषु स्थिताः सुष्ठु निशितास्तीक्ष्णाः ये शराः बाणास्तेषां यो वर्षवर्षणं धाराधरपातवत्, वृद्धो महान् यः करको–वृष्टिविस्तारो, मुच्यमानस्तादृशो यो घनो–मेघः तस्य चण्डवेगानां धाराणां

१ चड मु० प्र. २ भाथा इति लोकभाषा. ३ करहा इति भाषा.

ग्गसंधिताउच्छलियसत्ति-सूल-कणग-वामकरगहियखेडग- निम्मलनिक्किट्ठखग्ग-पहरंतकोंत-तोमर-चक्क-गया-परसु-मुसल-लंगल-सूल-लउल-भिंडिमाला-सब्बल-पट्टिस-चम्मेट्ठ-दुघण-मोट्ठिय-मोग्गर-वरफलिहजंत-पत्थर-दुहण-तोण-कुवेणी-पीढकलिय ईलीपहरणमिलिमिलिमिलंतखिप्पंति, विज्जुज्जलविरचितसमप्पनिपातः-पतनं तस्य मार्गो यः स तथा, पाठान्तरे तत्थमेयत्ति वा तत्र मत्मत्ययान्तत्वान्निपातवति-संग्रामे इति योज्यं। पुनः अनेकानि धनूंषि मण्डलाग्राणि-खड्गविशेषाः तथा सन्धिताः-क्षेपणीयमगुणीकृताः उच्छलिताः-उर्ध्वंगताः शक्तयो-देवाधिष्ठितशस्त्रविशेषाः, त्रिशूलाः-लोहमय्यः, कनकाश्च वाणास्तथा वामकरे गृहीतानि आत्मरक्षणार्थं, खेटकानि-फलकानि, तथा निर्मलीकृता-शाणैरुत्तेज्जिता कोशात् कर्षिता वा निकृष्टाः क्रूराः खड्गा यत्र तथा महारमट्टत्तानि कुन्तानि शस्त्रविशेषाः, तोमराः-वाणविशेषाः, चक्राणि-प्रतीतानि, शस्त्रगदाश्च दंडविशेषाः, परशवः-कुठाराः, मुशलानि-धान्यपेषणयन्त्राणि लाङ्गलानि हलानि लोहमयदंडानि, लकुटाः-यष्टयः, क्वचित् गुडा पाठः तत्र कुञ्जरसन्नाहः, भिन्दिमालाः, शव्वला-लोहमयभल्लाः पट्टिसाः-शस्त्रविशेषाः, चर्म्मेष्टाः-पाषाणाः, द्रुघणाः-आयातभल्लाः, मौष्टिका-मुंष्टिप्रमाणशस्त्रविशेषाः, मुंद्गरा, वरपरिघा-प्रधाना अर्गला यन्त्रप्रस्तरश्च-गोफणादिः, द्रुहणाः-कर्कराः, टक्करा तोणाः-शरन्धयः, कुवेण्यश्च रूढिगम्याः, नालिका-वाणा वा पीठानि आसनानि सर्वेषां द्वन्द्वसमासः एभिः कलितो व्याप्तः, तथा इलयः द्विधा धारखड्गविशेषाः-प्रहरणाः सर्वेऽपि शस्त्रविशेषाः तैः

१ ढाल इति लोकभाषा. २ बरछी भाला इति लोकभाषा. ३ दांतालं. ४ मोटो छुरा इति भाषा. ५ नालि इति भाषा. ६ खपुया इति भाषा. ७ मोगरा इति भाषा. ८ भाथा इति भाषा.

हणभतले, फुडपहरणे, महारणसंखभेरि-दुंदुभि-वरतूरपउरपडुपहडाहयणिणायगंभीरणंदित्त पक्खुभियविपुलघोसे, हयगयरहजोहतुरितपसरित-उद्धततमंधकारबहुले, कातरनरणयणहियववाउलकरे ॥

विलुलियउक्कडवरमउडतिरीडकुंडलोडुदामाडोविया, पागडपडागउसियज्झय-वेजयंति-चामरचलंतछत्तं-मिलिमिलिमिलंत त्ति मिलनेन चिकचिकायमानैः क्षिप्यमाणैः, विद्युतः क्षणप्रभाया निर्मलाया प्रभा तत्समाना-सदृशी तया विरचितं नभस्तलं आकाशं यत्र तत्। स्फुटानि प्रहराणानि यत्र तस्मिन् संग्रामे महारणस्य सम्बन्धीनि यानि शङ्खाश्च भेर्यश्च दुन्दुभ्यश्च भेरी-ताम्रमया दुन्दुभिश्चर्मनद्धा वरं-प्रधानं यत् तूर्यं-वादित्रं तेषां प्रचूराणां पटूनां-स्पष्टध्वनीनां पटहानां आहतानां-आस्फालितानां निनादेन-ध्वनिना गम्भीरेण-घनतया ये नन्दिता-हृष्टाः-हर्षवन्तो वीराः प्रक्षुभिताः-कम्पिताः कातरा तेषां विपुलो-विस्तीर्णो यो घोषो-नादो यत्र तत् तस्मिन्। हयास्तुरगाः, गजाः हस्तिनः, रथाश्चतुश्चक्राः, योधाः-सुभटास्तेभ्यः सकाशात्, त्वरितं-शीघ्रं प्रसृतं-प्रसरमुपगतं यद्रजो-धूली तदेवोद्धततममुत्कटं यत् अन्धकारं तेन बहुलं यत्र तस्मिन्, कातरनराणां नयनयोः हृदयस्य वा व्याकुलत्वं करोतीति तस्मिन्। विलुलितानि शिथिलतया चञ्चलानि उत्कटानि प्रधानानि यानि मुकुटानि मस्तकाभरणानि तिरीटानि च-तान्येव शिखरत्रयोपेतानि कुण्डलानि--कर्णाभरणानि उडुदामानि--नक्षत्राभिधानाभरणानि तेषां उद्दामा उत्कटा या आटोपिका स्फारता यत्र। तथा प्रकटा या पताका महत्तरा उच्छ्रिता-उर्ध्वीकृता या, ध्वजा-लघुपताकाः, वैजयन्त्यो-विजयसूचिकाः पताकास्तथा चामराणि वालव्यजनानि चलन्ति यानि छत्राणि-आतपत्राणि तेषां सम्बन्धि यदन्धकारं तेन गम्भीरोऽलब्धमध्यस्तस्मिन्। पुनः कीदृशः ? हयानां यत् हेषितं शब्दो हस्तिनां च यद् गुलुगुलायितं शब्दविशेषः, रथानां घण-

घकारगम्भीरे, हयहेसिय-हत्थिगुलुगुलाइय-रहघणघणाइय-पाइक्कहरहराइय-अप्फाडियसीहनाया, छेलियवि-घुट्ठुक्कुट्ठकंठगयसद्दभीमगज्जिए, सयराहहसंतरुसंतकलकलरवे, आसूणियवयणरुद्दे, भीमदसणाधरोट्ठगाढदट्ठे, सप्पहारणुज्जयकरे, अमरिसवसतिव्वरत्तनिद्दारितच्छे, वेरदिट्ठिकुद्धचिट्ठिय-तिवलीकुडिलभिउडिकयनिलाडे, वहपरिणयनरसहस्सविक्कमवियंभियबले ॥ वग्गंततुरगरहपहावियसमरभडा, आवडियछेयलाघवपहारसाधिता, घणोत्ति शब्दः--चीत्कारादिः, पदातीनां यत् हरह-रेत्ति शब्दकरणं, अस्फोटितकरणेन सिंहस्येव शब्दकरणं। छेलियत्ति सेंटितं सीत्कारकरणं, विघुट्ठं च-विरूपघोषकरणं, उत्कुट्ठं च उत्कृष्टनादकरणं आनन्दमहाध्वनिरित्यर्थः, कण्ठकृतशब्दश्च गलागलाटशब्दः स एव भीमगर्जितं-मेघध्वनिर्यत्र स तथा। सयराहत्ति-एकहेलया हसन्तां रुष्यन्तां अश्रूणि मुञ्चन्तां कलंकलंतरयः शब्दो यस्मिन् तत्र। ईषत्स्थलीभवन् अश्रुभिर्विकृतवदनेन रौद्रो भीमो-भयङ्करः दशनैर्दन्तैः अधरोष्ठो दष्टो यैस्ते कर्मधारयस्सर्वत्र ततस्तेषां भटानां सत्प्रहारकरणेन दृढं गाढं उद्यताः-प्रयत्नात् प्रवृत्ताः कराः यत्र तत्तथा। अमर्षवशेन-कोपवशेन तीव्रं-अत्यर्थं रक्ते-लोहिते निर्दारिते विस्फारिते अक्षिणी लोचने यत्र तत्। वैरप्रधाना दृष्टिः वैरदृष्टिस्तया-वैरबुद्धया-वैरभावेन ये क्रुद्धाश्चेष्टिताश्च तेस्त्रिवलीकुटिला-वलीत्रयवक्राः भ्रकुटिर्नयनविकारं ललाटे यत्र तत् तस्मिन्। तथा वधपरिणतानां-मारणाध्यवसायवतां नरसहस्राणां विक्रमेण पुरुषाकारविशेषेण विजृम्भितं-विस्फुरितं बलं-शरीरसामर्थ्यं यत्र स तथा तत्र। वलगन्तः परस्परं स्पर्शन्तो ये तुरङ्गा रथाश्च तैः प्रधाविता वेगेन प्रवृत्ताः ये समरभटाः संग्रामयोधास्ते तथा। आपतिताः योद्धुमुद्यताः छेका-दक्षा

१ सचिय.

समूंस्सियबाहुजुयलं मुक्कट्टहासपुक्कंतबोलबहुले ॥

फलफलगावरणगहिय–गयवरपत्थितदरियभडखल–परोप्परपलग्गजुद्धगव्वित–विउसितवरासिरोसतुरिय अभिमुहपहरिंतछिन्न–करिकरेविरंगितकरे, अवइद्धनिसुद्धभिन्नफालियपगलिय–रुहिरकंतभूमिकद्दमचिलिचिल्ल-पहे, कुच्छिदालियगलिंत–रुलिंतनिभेलंतंत–फुरुफुरंत–ऽविगलमम्माहय–विकयगाढदिन्नपहारसमुच्छिंत–रुलंत-वेंभलविलावकलुणे, हयजोहभमंत–तुरग–उद्दाममत्तकुंजर–परिसंकितजण–निव्वुकच्छिन्नधयभग्गरहवरनट्ठसि-लाघवप्रहारेण दक्षताप्रयुक्तघातेन साधिता–निर्मिता यैस्ते तथा ॥ समुसियत्ति समुच्छ्रितं हर्षातिरेकात् उर्ध्वीकृतं–बाहुयुगलं–भुजाद्वयं यत्र तत् । यथा भवति तथा मुक्ताट्टहासाः,–कृतमहाहासध्वनयः फुत्कुर्वन्तः पूत्कारं कुर्वाणाः सर्वत्र कर्मधारयस्ततस्तेषां यो बोलः–कलकलः स बहुलो प्रचुरो यत्र तस्मिन् । स्फुराः खेटकावरणफलकानि खेडकानि गृहीतानि यैस्ते तथा, गजवरान् रिपुमतंगजान् प्रार्थयमाना हन्तुमारोढुं वा अभिलषमाणास्तत्र आसक्तास्तच्छीला । ये दृप्ता भटाः दुष्टयोधाः खलाः, परस्परं वलगन्तो ये युद्धकलाविज्ञानगर्वितास्तैर्विकोसितवरासिभिः निष्काशितैः नवकरवालैः कृत्वा रोषेण–कोपेन त्वरितं–शीघ्रं आभि-मुख्येन प्रहरणैः छिन्नाः–छेदिता ये करिकरा–हस्तिशुण्डा दण्डा यैस्तैर्व्यङ्गिताः–खण्डिताः कराः यत्र तस्मिन् । पुनः कीदृशे अपविद्धास्तोमरादिना सम्यग् विद्धा निश्चितं भिन्ना निर्भिन्नाः स्फाटिता–विदारिता ये तेभ्यो यत् प्रगलितं गलत् यत् रुधिरं तेन कृतो यो भूमौ कर्दमः पङ्कस्तेन [2]चिलीना पङ्कायमाना पन्थाना यत्र तस्मिन् । पुनः कीदृशे ? कुक्षौ दारिताः सन्तो गलितं

१ विभंगित २ विपलाला इति भाषा.

रकरिकलेवराकिन्न-पतितपहरण-विकिन्नाभरणभूमिभागे,नच्चंतकबंध-पउरभयंकरवायस-परिलेंतगिद्धमंडलभमंत-च्छायंधकारगंभीरे ॥

वसुवसुहविकंपितव्व पच्चक्खपिउवणं परमरुद्दबीहणगं दुप्पवेसतरगं अभिवयंति संगामसंकडं परधणं महंता, अवरे पाइक्कचोरसंघा सेणावतिचोरवंदपागड्ढिका य अडवीदेसदुग्गवासी कालहरितरत्तपीतसुक्किल्ल-अ-

रुधिरं श्रवन्ति रुलन्ति वा-भूमौ लुठन्ति निर्भेलितानि-कुक्षितो वहिःकृतानि सूत्राणि अंत्राणि उदरमध्यावयवविशेषाः येषां ते तथा फुरफुरायमाणाश्च विकलाश्च-निरुद्धेन्द्रियवृत्तयो ये ते तथा, मर्मणि हतो मर्मस्थानकघाती, विकृतो रागद्वेषादिना गाढ-उदग्र प्रहारो येषां ते तथा, अतएव समुर्च्छिताः सन्तो भूमौ लुठन्तो विह्वलाश्च-निस्सहांगा ये ते तथा। ततः कुक्षिदारितादिपदानां सर्वेषां कर्मधारयस्ततस्तेषां विलापः—करुणोदयस्वरस्तेन कलुणं-दीनं यत्र तस्मिन्। पुनः कीदृशे ? हता ये योधाः भ्रमन्तो ये तुरगाः उद्दामा मत्ता ये कुञ्जरा-द्विपाः परिशङ्कितजनाश्च निब्बुका निर्मूलं कृत्वा छेदिता छिन्ना अर्द्धछिन्ना ये ध्वजाः केतवस्तादृशा भग्ना ये रथवराश्च यत्र तथा, नष्टशिरोभि-च्छिन्नमस्तकैः करिकलेवरैर्हस्तिकलेवरैः दन्तिशरीरैराकीर्णाः-व्याप्तास्तादृशाः, पतितप्रहरणाः-ध्वस्तायुधाः, विकीर्णाभरणा-विक्षिप्तालङ्कारास्तादृशाः भूमेः-पृथिव्याः भागा-देशा यत्र स तथा तस्मिन् सर्वत्र कर्मधारयः। नृत्यन्ति कवन्धानि शिरोरहितकलेवराणि प्रचुराणि यत्र स तथा, भयंकारिणो ये वायसाः-काकाः, परिलित्त गिद्धत्ति परिलीयमानगृद्धानां च यन्मण्डलं-चक्रं भ्राम्यत्-सञ्चरत् तस्य या छाया तया यत् अन्धकारं-तमः तेन गम्भीरोऽलब्धमध्यो यः स तथा पुनस्तादृशे ? संग्रामे अपरे राजानः परधनगृद्धा अतिपतन्ति इति यदुक्तं तत् व्याख्यातं—

णेगसयचिंधपट्टबद्धा परविसए अभिहणंति ॥

लुद्धा धणस्स कज्जे रयणागरसागरं उम्मीसहस्समालाउलाकुलवितोयपोतकलकलेंतकलियं, पायालसहस्सवायवसवेगसलिल–उद्धम्ममाणदगरयरयंधकारं, वरफेणपउरधवलपुलंपुलसमुट्ठियट्टहासं, मारुयविच्छुभमाणपाणियं, जलमालुप्पीलहुलियं, अविय समंतओ खुभियलुलियखोखुब्भमाण–पक्खलियचलियविपुलजलचक्क-

अथ पूर्वोक्तमेव अर्थं संक्षिप्ततरेणाऽऽह—

वसवो देवा वसुधा–पृथ्वी विशेषेण कम्पिते घाते इव प्रत्यक्षमिव साक्षादिव पितृवनं–श्मशानतुल्यं अतएव रौद्रं–दारुणं वीहनकं प्रवेष्टुमशक्यं सामान्यजनस्येति गम्यं, अन्तर्मध्ये गमनं यस्य तदपि प्रविशन्ति परद्रव्यग्रहणार्थं । संग्रामसंकटं रणगहनं परधनमिच्छता पुरुषेण इति तात्पर्यं, अपरे–अन्ये राजानः राजन्यः पाइक्का द्वादशधा पदातयः चौरसमूहाः, सेनापतयः कीदृशाः चौरवृन्दप्रकर्षकाः तत्प्रवर्त्तका इत्यर्थः, अटवीदेशे यानि दुर्गाणि–जलस्थलदुर्गरूपाणि तेषु वसन्ति ये ते तथा, श्यामनीलरक्त–पीतशुक्लाः पञ्चवर्णा इति यावत् अनेकशतसङ्ख्याकाश्चिह्नपट्टा बद्धा यैस्ते तथा, परविषयान्–परदेशान् प्रति अभिघ्नन्ति, लुब्धा–लोलुपाः धनस्य कार्ये द्रव्यकृते इत्यर्थः । रत्नाकरभूतो यः सागरः–समुद्रः तं प्रति अभिनिपत्य घ्नन्ति जनस्य पोतानिति सम्बन्धः । कीदृशं सागरं ? उर्म्मयो–वीचयो महत् कल्लोलास्तत्सहस्राणां मालाः–पङ्क्तयस्ताभिराकुलो यः स तथा, आकुला–जलाऽभावेन व्याकुलितचित्ता ये वितोयपोताः–विगतजलयानपात्राः तद्वासिनः सांयात्रिकजनास्तेषां यः कलकलः कोलाहलं कुर्वाणास्तैः कलितो यः स तथा ॥ वितोयपदेन अस्य अपेयजलत्वमुपदर्शितं । पुनः कीदृशं ?

वाल-महानईवेगतुरियआपूरमाणगंभीर-विपुलआवत्त-चवलभममाणगुप्पमाणुच्छलंत-पच्चोणियत्त-पाणियपधाविग्रखरफरुस-पयंडवाउलियसलिल-फुट्टंतवीतिकल्लोलसंकुलं,महामगर-मच्छ-कच्छभोहार-गाह-तिमि-सुंसुमार-सावयसमाहयसमुद्धायमाणकपूरघोरपउरं,कायरजणहियकंपणं,घोरमारसंतं,महब्भयं,भयंकरं,पतिभयं, पातालकलशास्तेषां सहस्राणि तैर्वातवशाद्वेगेन यत्सलिलं-जलधिजलं 'उद्धममाणं' उत्पाद्यमानं यत् उदकरजो-नीररेणुस्तदेव रजोंधकारं-धूलीतमो यत्र स तथा तं पुनः कीदृशं ? वर-प्रधान फेनो डिंडीरः प्रचुरो धवलः--उज्ज्वलः पुलंपुलत्ति निरन्तरं फुल्लित इव यः समुत्थितः--प्रकटित स एव अट्टहासो यत्र तं, मारुतेन--वायुना विक्षुभ्यमाणं--कम्पमानं पानीयं यत्र स तं पानीयं तथा जलमालानां--नीरकल्लोलानां उत्पीलः--समूहो हुलियत्ति शीघ्रो यत्र सस्ततः कर्मधारयः। तमपि चेति--समुच्चये तथा समन्ततः--सर्वतः क्षुभितं वायुना--व्याकुलितं लुलितं--तीरभुवि प्राप्तं खोखुब्भमाणं महामत्स्यादिभिर्भृशं व्याकुलीक्रियमाणं प्रस्खलितं--निर्गच्छन् पर्वतादिभिरस्खलितं, चलितं--स्वस्थानगमनप्रवृत्तं वेलमर्यादया, विपुलं--विस्तीर्णं जलचक्रवालं--नीरवृन्दं यत्र तं। तथा महानदी-गंगादिनिम्नगास्तासां वेगैः त्वरितं यथा भवति तथा, आपूर्यमाणो य स तथा गंभीरविपुला-विस्तीर्णा ये आवर्त्ताः पानीयभ्रमणस्थानरूपाः तेषु चपलं यथा भवति तथा, भ्रमन्ति संचरन्ति गुप्यन्ति--व्याकुलीभवन्ति उच्छलन्ति--उत्पतन्ति आकाशे उच्चलन्ति--उर्ध्वमुखेन प्रत्यवनिवृत्तानि वा-अधःपतितानि, प्राणिभिर्भृतानि यानपात्राणि वा प्राणिनो यत्र तं, प्रधाविता वेगतया खरपरुषा-अतिकर्कशाः, प्रचण्डा--रौद्रा व्याकुलितसलिला-विलोलितजला स्फुटन्तो-विदीर्यमाणा ये वीचयस्तरंगा लघवः कल्लोला

१ पोलो फोफस इति भाषा. २ पाजरो इति भाषा. ३ भमरा इति भाषा.

उत्तासणगं, अणोरपारं, आगासं चेव निरवलंबं, उप्पाइयपवणधणित–नोल्लिय उवरुवरितरंगदरिय–अतिवेग-वेगचक्खुपहमुच्छरंतं, कच्छइगंभीर–विपुलगज्जियगुंजिय–निग्घायगरुयनिवतितसुदीहनीहारि–दूरसुच्चंत-गंभीरधुगुधुगंतसद्दं, पडिपहरुंभंत–जक्खरक्खसकुहंडपिसायरुसिय–तज्जायउवसग्गसहस्ससंकुलं, बहूप्पाइय-भूयं, विरचितवलिहोमधूवउवचारदिन्न–रुधिरच्चणाकरणपयत–जोगपययचरियं, परियन्तजुगंतकालकप्पोवमं, महान्तस्तैः संकुलं व्याप्तं । महान्तः शरीरत्वेन ये मकराः मत्स्याः कच्छभाः ओजहारा जलजन्तुविशेषा, ग्राहास्तन्तुमत्स्याः, तिमयः--शृङ्गिमत्स्याः, सुसुमाराश्च--श्वापदाकाराश्चेति द्वन्द्वं तेषां समाहताश्च परस्परेणोपहताः उद्धावन्तश्च–महाराय समुत्तिष्ठंतो ये पूराः संघाः--समूहाः घोरा--रौद्राः ते प्रचुरा यत्र तं । पुनः कीदृशं ? कातरजनहृदयकम्पनशीलं, घोरं--रौद्रं यथा भवति तथा आरसन्तं शब्दायमानं महद्भयं अतएव भयकरं एकार्थपदानि भयप्रतीतिकारकानि उत्प्राबल्येन त्रासनकमकस्माद्भयकारकं अतएवाऽतिमहत्वात् अनर्वाक् पारं परतटआकाशमिव निरालम्बं नहि तत्र पतद्भिः किञ्चिदालम्बनमाश्रीयते इति भावः । पुनः कीदृशं ? औत्पातिकपवनेन उत्पादजनितवायुना घणियन्ति अत्यर्थं, पणोल्लियन्ति नोदिताः--प्रेरिताः उपरि उपरि निरन्तरं पतन्तस्तरङ्गाः--कल्लोलास्तेषां दृप्त इव स्वभावेनैव भयप्राप्त इव अतिवेगातिक्रान्तत्वात् विशेषेण यो वेगस्तेन चक्षुःपथं दृष्टिमार्गं प्रति आच्छादयन्तं विलोकयितुमशक्यं किं पुनस्तरीतुं, क्वचित् प्रदेशे गम्भीरं--अलब्धमध्यं, विपुलं--विस्तीर्णं यत् गर्ज्जितं मेघध्वनिः गुञ्जितं --वाजित्रविशेषो गुञ्जाकारं तद्वद्ध्वनिर्यत्र तथा निपातजनितध्वनिर्यत्र, तथा सुदीर्घं--अत्यर्थं निह्रादीवज्राघातवत् ध्वनिर्यत्र, दूरे

१ न देखइ इति भाषा।

दुरंतं महानईनईवईमहाभीमदरिसणिज्जं, दुरणुचरं, विसमप्पवेसं, दुक्खुत्तारं, दुरासयं, लवणसलिलपुण्णं, अ-
सियसियसमूसियगेहिं हत्थतरकेहिं वाहणेहिं अइवइत्ता समुद्दमज्झे हणंति, गंतूण जणस्स पोते ॥

श्रूयमाणो गंभीरः सर्वत्र कर्मधारयः, धुगधुगित्ति धडधडेति शब्दो यत्र तत् । प्रतिपथं प्रतिमार्गं रुंभन्तः स्खलमानाः यक्षराक्षसकूष्मांडपिशाचाः व्यंतरविशेषास्तेषां यत् प्रतिगर्ज्जितं क्रीडार्थं रुसितं रोषाज्जातं वा तज्जातानि यानि उपसर्गसहस्राणि उपद्रवसहस्रसंख्यानि च तैस्संकुलो वा यः स तं । बहूनि उत्पातिकानि भूतः प्राप्तो यस्स तथा तं वाचनान्तरे उपद्रवाऽभिभूतः । विरचितो बलिना–उपहारेण होमेन--अग्निकारिकया धूपेन उपचारो--देवतापूजा यैस्ते तथा, दत्तं--वितीर्ण्णं रुधिरं यत्र तत्, तथा तदर्चनाकरणे प्रयता ये ते तथा, योगेषु--प्रवहणोचितव्यापारेषु प्रयता ये ते तथा, विरचितं--निर्मापितं सांयात्रिकैरित्यध्याहार्यं । पर्यन्तयुगस्य--कल्पान्तकालस्य उपमा रौद्रत्वात् यस्य स तं, दुःखेन प्राप्यते अन्तं परपारं यस्य तत् । महानदीनां--गंगादीनां पतिः प्रभुस्तं महान् भीमो -रौद्रः अतएव अदर्शनीयं--द्रष्टुमयोग्यमदर्शनं यस्य स तं । दुःखेन आश्रीयते इति दुराश्रयस्तं, तथा दुःखेन अनुचर्यते इति दुरनुचरस्तं, लवणसलिलपूर्णत्वात् विषमः प्रवेशो यस्य स तं, दुःखेन उत्तरणं यस्य स परतटगमनं, दुःखेन आसाद्यते -प्राप्यते कातरजनैरिति, क्षारजलपूर्णं अस्यैव लवणास्वादत्वं, अन्ये त्विक्षुरसाः भिन्नरसास्तु षट् क्षीर--दधि--आज्य सुरेक्षवः इति ज्ञेयं, असिताः--कृष्णाः सिताः--श्वेताः संमूर्च्छिताः--उर्ध्वीकृता दूरादनुपलक्षणहेतोरिति सितासिसमुच्छ्रितकैः तादृशै र्हस्तेतरंगैर्गुणवृक्षैर्वेगवद्भि तादृशैर्वाहनकैः प्रवहणकैः तैः कृत्वा पूर्वोक्तं सागरं अतिक्रमित्वा समुद्रमध्ये

१ सद्द इति भाग.

परदव्वहरा नरा निरणुकंपा निरावयक्खा गामागर–नगर–खेड–कब्बड–मडंब–दोणमुह–पट्टणा–सम–णिगम –जणवय ते य धणसमिद्धे हणंति,थिरहिया य छिन्नलज्जा बंदिग्गाहगोग्गहे य गेण्हंति, दारुणमती णिक्किवा णियं हणंति, छिंदंति गेहसंधिं, निक्खित्ताणि य हरंति, धणधन्नदव्वजायाणि जणवयकुलाणं णिग्घिणमती परस्स दव्वाहिं जे अविरया ॥

तहेव केई अदिन्नादाणं गवेसमाणा कालाकालेसु संचरंता चियकापज्जलियसरस–दरदड्ढकड्ढियकलेवरे रुहि-

घ्नन्ति मारयन्ति गत्वा जनस्य–सांयात्रकलोकस्य, पोतान्–यानपात्राणि । परेषां द्रव्यान् हरन्ति ते परद्रव्यहराः, निर्गता अनुकम्पा–दया येषां ते, परलोकं प्रति निरवकांक्षाः,ग्रामो वृत्त्या वृत्तः ग्रसति बुद्ध्यादि गुणान् इति ग्रामः,आकराः--खन्यादीनां, अष्टादशकररहितं नगरं, खेटं धूलिप्राकारं, कर्बटं कुनगरं, मडम्बं सर्वतः सार्द्धद्वययोजनान्तर्गतग्रामवेष्टितं, द्रोणमुखं--जलस्थ-लपथोपेतं, पत्तनं--जलपथो रत्नभूमिर्वा, आश्रमस्तापसादीनां, निर्गमो व्यापारिजनस्थानं, जनपदो--देशः एतेषां द्वन्द्वः तान् धनसमृद्धान् घ्नन्ति--हन्यन्ते । कीदृशाः ? स्थिरहृदया तत्राऽदत्तादाने निश्चलचित्ताः छिन्ना--च्छेदिता लज्जा–त्रपा यैस्ते तथा-विधाः वन्दिनां ग्राहं कुर्वन्ति गोग्रहांश्च गवादीनां ग्रहणं कुर्वन्ति । दारुणा मतिर्येषां ते, निर्गता कृपा येषां ते निःकृपाः घ्नन्ति निजकान् जनानिति शेषः, छिन्दन्ति गेहसन्धि गृहाणां सन्धि इत्यर्थः, निक्षिप्तानि–भूमौ स्थापितानि अपि हरन्ति–गृह्णन्ति, धनधान्यद्रव्यसमुदायानि, जनपदा–देशास्तेषां कुलानां लोकगृहाणां निर्घृणमतयः–निर्दयबुद्धयः परेषां द्रव्यादिग्रहणे एतादृशाः ये ते अविरता–असंयताः, तथैव केऽपि अदत्तादानं–अवितीर्णं परेषां द्रव्यं गवेषयन्तः कालः प्रस्तावः सन्ध्यादिः, अकालो–

**दुरंतं महानईनईवईमहाभीमदरिसणिज्जं, दुरणुचरं, विसमप्पवेसं, दुक्खुत्तारं, दुरासयं, लवणसलिलपुण्णं, असियसियसमूसियगेहिं हत्थतरकेहिं वाहणेहिं अइवइत्ता समुद्दमज्झे हणंति, गंतूण जणस्स पोते ॥**

श्रूयमाणो गंभीरः सर्वत्र कर्मधारयः, धुगधुगित्ति धडधडेति शब्दो यत्र तत्। प्रतिपथं प्रतिमार्गं रुंभन्तः स्खलमानाः यक्षराक्षसकूष्मांडपिशाचाः व्यंतरविशेपास्तेषां यत् प्रतिगर्ज्जितं क्रीडार्थं रुसितं रोषाज्जातं वा तज्जातानि यानि उपसर्गसहस्राणि उपद्रवसहस्रसंख्यानि च तैस्संकुलो वा यः स तं। बहूनि उत्पातिकानि भूतः प्राप्तो यस्स तथा तं वाचनान्तरे उपद्रवाऽभिभूतः। विरचितो बलिना--उपहारेण होमेन--अग्निकारिकया धूपेन उपचारो--देवतापूजा यैस्ते तथा, दत्तं--वितीर्ण्णं रुधिरं यत्र तत्, तथा तदर्चनाकरणे प्रयता ये ते तथा, योगेषु--प्रवहणोचितव्यापारेपु प्रयता ये ते तथा, विरचितं--निर्मापितं सांयात्रिकैरित्यध्याहार्यं। पर्यन्तयुगस्य--कल्पान्तकालस्य उपमारौद्रत्वात् यस्य स तं, दुःखेन प्राप्यते अन्तं परपारं यस्य तत्। महानदीनां--गंगादीनां पतिः प्रभुस्तं महान् भीमो -रौद्रः अतएव अदर्शनीयं--द्रष्टुमयोग्यमदर्शनं यस्य स तं। दुःखेन आश्रीयते इति दुराश्रयस्तं, तथा दुःखेन अनुचर्यते इति दुरनुचरस्तं, लवणसलिलपूर्णत्वात् विषमः प्रवेशो यस्य स तं, दुःखेन उत्तरणं यस्य स परतटगमनं, दुःखेन आसाद्यते -प्राप्यते कातरजनैरिति, क्षारजलपूर्णं अस्यैव लवणास्वादत्वं, अन्ये त्विक्षुरसाः भिन्नरसास्तु षट् क्षीर--दधि--आज्य सुरेक्षवः इति ज्ञेयं, असिताः--कृष्णाः सिताः--श्वेताः संमूर्च्छिताः--उर्ध्वीकृता दूरादनुपलक्षणहेतोरिति सितासिसमुच्छ्रितकैः तादृशै र्हस्ततरंगैर्गुणदृक्षैर्वेगवद्भि तादृशैर्वाहनकैः प्रवहणकैः तैः कृत्वा पूर्वोक्तं सागरं अतिक्रमित्वा समुद्रमध्ये

१ सढ इति भाषा.

परदव्वहरा नरा निरणुकंपा निरावयक्खा गामागर–नगर–खेड–कब्बड–मडंब–दोणमुह–पट्टणा–सम–णिगम–जणवय ते य धणसमिद्धे हणंति, थिरहिया य छिन्नलज्जा बंदिग्गाहगोग्गहे य गेण्हंति, दारुणमती णिक्किवा णियं हणंति, छिंदंति गेहसंधिं, निक्खित्ताणि य हरंति, धणधन्नदव्वजायाणि जणवयकुलाणं णिग्घिणमती परस्स दव्वाहिं जे अविरया ॥

तहेव केई अदिन्नादाणं गवेसमाणा कालाकालेसु संचरंता चियकापज्जलियसरस–दरदड्ढकड्ढियकलेवरे रुहि-घ्नन्ति मारयन्ति गत्वा जनस्य–सांयात्रकलोकस्य, पोतान्–यानपात्राणि। परेषां द्रव्यान् हरन्ति ते परद्रव्यहराः, निर्गता अनुकम्पा–दया येषां ते, परलोकं प्रति निरवकांक्षाः, ग्रामो वृत्त्या वृत्तः ग्रसति बुद्ध्यादि गुणान् इति ग्रामः, आकराः–खन्यादीनां, अष्टादशकररहितं नगरं, खेटं धूलिप्राकारं, कर्बटं कुनगरं, मडम्बं सर्वतः सार्द्धद्वययोजनान्तर्गतग्रामवेष्टितं, द्रोणमुखं–जलस्थलपथोपेतं, पत्तनं–जलपथो रत्नभूमिर्वा, आश्रमस्तापसादीनां, निर्गमो व्यापारिजनस्थानं, जनपदो–देशः एतेषां द्वन्द्वः तान् धनसमृद्धान् घ्नन्ति–हन्यन्ते। कीदृशाः ? स्थिरहृदया तत्राऽदत्तादाने निश्चलचित्ताः छिन्ना–च्छेदिता लज्जा–त्रपा यैस्ते तथाविधाः वन्दिनां ग्राहं कुर्वन्ति गोग्रहांश्च गवादीनां ग्रहणं कुर्वन्ति। दारुणा मतिर्येषां ते, निर्गता कृपा येषां ते निःकृपाः घ्नन्ति निजकान् जनानिति शेषः, छिन्दन्ति गेहसन्धि गृहाणां सन्धि इत्यर्थः, निक्षिप्तानि–भूमौ स्थापितानि अपि हरन्ति–गृह्णन्ति, धनधान्यद्रव्यसमुदायानि, जनपदा–देशास्तेषां कुलानां लोकगृहाणां निर्घृणमतयः–निर्दयबुद्धयः परेषां द्रव्यादिग्रहणे एतादृशाः ये ते अविरता–असंयताः, तथैव केऽपि अदत्तादानं–अवितीर्णं परेषां द्रव्यं गवेपयन्तः कालः प्रस्तावः सन्ध्यादिः, अकालो–

रलित्तवयण-अखत-खातियपीतडाइणिभमंत-भयकरं-जंबुयक्खिक्खियंते, घुयकयघोरसद्दे, वेयालुट्ठियनियुद्ध-
कहकहितपहसित-बीहणकनिरभिरामे, अतिदुब्भिगंध-बीभच्छदरसणिज्जे, सुसाण-वण-सुन्नघर-लेणअंत-
रावण-गिरिकंदर-विसमसावयसमाकुलासु वसहीसु किलिस्संता, सीतातवसोसियसरीरा-दड्ढच्छवी निरयति-

अनवसर-स्तेपु संचरणशीला अनुचितरूपोपयोगेषु भ्रमन्तः चितिकाचयः तासु प्रज्वलितानि सरसानि-रुधिरादिषु युक्तानि यानि। दर ईषत् दग्धानि-भस्मीकृतानि कृष्टानि-आकर्षितानि तथाविधकार्ये आनीतानि मृतकलेवराणि यत्र तत्, एतावता श्मशाने सुवर्णपुरुपार्थे क्लिश्यमाना--अटव्यां वासमुपयान्ति धनार्थे इति भावः। रुधिरक्लिन्नवदनाभिः अक्षतानि-समग्राणि खादितानि भक्षितानि मृतकानां शरीराणि इति गम्यते, पीतानि शोणितानि याभिस्ता डाकिनीशाकिन्यादयो भ्रमन्त्यो यत्र तथा, भयंकराः ये जम्बूकाः--शृगालाः खिखित्ति शब्दं कुर्वाणा या शिवाविशेषा यत्र तत्। घुघुत्ति शब्दं कुर्वाणा घूका यत्र तत्, वैतालेभ्यो विकृतपिशाचेभ्यः उत्थितं--संजातं संजातनियुद्धं-बाहुयुद्धं शब्दान्तरमिश्रं, कहकहत्ति कहकहायमान यत् प्रहसित-हसनं तेन बीहनकं--भयानकं अतएव निरभिरामं अरमणीयमित्यर्थः। अतिशयेन दुर्गन्धो यत्र अतएव बीभत्सं दर्शनं यस्य तत्। सर्वपदानां कर्मधारयः एतादृशं श्मशानं- पितृकाननं तस्मिन् याति, वने--कानने याति, शून्यगृहे याति धनार्थे, लयनानि शिलामयगृहाणि, अन्तरा ग्रामादीनां मध्यपथे, आपणाः हट्टाः, गिरिकंदरागिरिगुफास्तेषां द्वन्द्वः, विषमा--असदृशा अथवा विपेन मीयन्ते इति विषमा ये श्वापदा दुष्टजीवविशेषास्तैः समाकुला-सुव्याप्ता सुवसतिषु--वासस्थानेषु क्लिश्यन्तः--क्लेशं

**रियभवसंकडदुक्खसंभारवेयणिज्जाणि पावकम्माणि संचिणंता, दुल्लहभक्खन्नपाणभोयणा, पिवासिया, झुंझिया, किलंता, मंसकुणिमकंदमूलजंकिंचिकयाहारा, उव्विगा, उस्सुया, असरणा, अडवीवासं उवेंति ॥**

**वालसतसंकणिज्जं अयसकरा तक्करा भयंकरा कस्स हरामोत्ति अज्ज दव्वं इति सामत्थं करेंति, गुज्झं बहुयस्स जणस्स कज्जकरणेसु विग्घकरा मत्तपमत्तपसत्तवीसत्थछिद्दघाती वसणब्भुदएसु हरणबुद्धी विगव्व**

माप्नुवन्ति, पुनः कीदृशाः? सितातपशोषितशरीराः, दढछवीत्ति दग्धकान्तयः, नरकतिर्यग्भवेषु यानि संकटानि महद्रूपकष्टानि–दुःखानि सोढुं शक्यानि लघूनि तेषां यः संभारो बाहुल्यं तेन वेद्यन्ते–अनुभूयन्ते यानि पापकर्माणि तानि संचिन्वन्तो बन्धन्तः, दुर्लभं–दुरापं यद्भक्षं मोदकाद्यशनं पानं मद्यादिभोजनं प्रातरशनादि येषां, पिपासिता तृषिता–जाततृषः, बुभुक्षिता–अनिर्वृत्तेच्छाः, क्लान्ता–ग्लानीभूताः सन्तः, मांसं जंगलं, कुणपः शवः, कन्दा–भूम्यन्तर्गता मूलानि तज्जातीय अधः स्थापिता-स्तेषां तानि वा, तदपि किञ्चित् स्वल्पमात्रं कृत आहारो यैस्ते तथा। उद्विग्नाः–उद्वेगवन्तः, उत्सुकाः–स्वभावत एव धैर्यरहिताः, अशरणाः– अत्राणा गृहवर्जिता वा, तादृशाः सन्तः अटव्यां वासं स्थानं माप्नुवन्ति। व्यालानां–दुष्टश्वापदानां यानि शतानि तैः शंकनीयं भुजङ्गादिभिर्भयंकरं, तथा अयशस्करा–अकीर्त्तिभाजः–तस्कराश्चौराः भयकारिणः कस्य जनस्य धनं हरामो–गृह्णीमः। इति अमुना प्रकारेण इदं विवक्षितं अद्य अस्मिन्नहनि द्रव्यं–धनं अस्य गृह्णीमः, इति सामर्थ्यं कुर्वन्ति–मन्त्रणां विचारयन्ति गुह्यं–रहस्यं बहुकस्य जनस्य कार्यकरणशीलेषु प्रयोजनेषु विघ्नंकराः अन्तरायकर्त्तारः, मत्तो मद्यादिपानेन क्षीबः,

१ उप्पुया मू. प्र.

रुहिरमहिया परेंति नरवतिमज्जायमतिक्कंता सजणजणदुगंछिआ सकम्मेहिं पावकम्मकारी असुभपरिणयाय दुक्खभागी 'निच्चाउलदुहमनिव्वुइमणा इहलोके चेव किलिस्संता परदव्वहरा नरा वसणसयसमावण्णा ॥सू. ११

तहेव केइ परस्स दव्वं गवेसमाणा गहिता य हया य बद्धरुद्धा य तुरियं अनिधाडिया पुरवरं समप्पिया चोरग्गहचारभडचाडुकराण तेहि य कप्पडप्पहार-निद्दयआरक्खिय-खरफरुसवयण—तज्जणगलच्छुल्लुच्छल्लणाहिं प्रमत्तो निद्रां प्राप्तः, प्रसक्ता द्युतादिव्यसनासक्ता वा, विश्वस्ता विश्वासभाजस्तान् प्रति च्छिद्रं अवसरं प्राप्य घ्नन्तीत्येवंशीला ये ते, तथा व्यसनाभ्युदयेषु हरणबुद्धयः किञ्चित्, विगत्ति वृका इव नाखरविशेषा इव लोहितेच्छवः पर्यटन्ति सर्वतो भ्रमन्ति, पुनः कीदृशाः नरपतिमर्यादायां अतिक्रान्ताः सज्जनजनेन विशिष्टलोकेन जुगुप्सिता नीन्दिताः असत्कर्मभिः अभिहिताः प्रेरिताः सन्तः, पापकर्मकारिणः पापधर्मानुष्ठायिनः, अशुभपरिणता अशुभचित्तपरिणामाः अशुभाशयाः अतएव दुःखभागिन्य इति व्यक्तः। नित्यं—सदा आविलं सकालुष्यं आकुलं वा दुःखं—प्राणिनां दुःखहेतुः तथा अनिर्वृत्तिः—स्वास्थ्यरहितं मनो येषां ते,इह लोके एव क्लिश्यमाना वधबन्धादिना, परद्रव्यहरणशीलाः नराः—मनुष्याः व्यसनशतसमापन्नाः कष्टशतं प्राप्ता इति व्यक्तं। परद्रव्यं गवेषमाणा—विलोकयन्तः। गृहीता—बद्धा राजपुरुषैर्हता यष्टिमुष्टयादिभिः, बद्धा—रज्वादिभिः, रुद्धा—संयमिताः त्वरितं शिघ्रं अनिर्घाटिता न निष्काशिताः भ्रामिताः, पुरवरं नगरं समर्पिताः ढौकिताः, चौरग्राहाश्च,चारभटाः शूराः, चाडुकाराः अथवा चारकवसतिप्रवेशिताश्चौराः तैः कल्पिताः प्रहाराः लकुटाकारवलितचीवरैस्ताडनानि। निर्दया निष्करुणा ये आरक्षिकाः तेषां सम्बन्धीनि यानि खरपुरुष

१ निष्फल मू. प्र. २ लाजमर्याद रहित इति भाषा. ३ लासरियो इति भाषा. ४ गोटीला इति भाषा.

विमणा चारगवसहिं पवेसिया निरयवसहिसरिसं तत्थवि ॥ गोम्मियप्पहारदूमण निब्भच्छण-कडुयवदणभेसणगभयाभिभूया, अक्खित्तनियंसणा, मलिणदंडिखंडवसणा, उक्कोडालंचपासमग्गणपरायणेहिं [ दुक्खसमुदीरणेहिं] गोम्मियभडेहिं विविहेहिं बंधणेहिं, किं ते ? ॥

हडि-निगड-वालरज्जुय-कुदंडग-वरत्त-लोहसंकल-हत्थंदुय-वज्झपट्ट-दामक-णिक्कोडणेहिं अन्नेहि य एवमादिएहिं गोम्मिकभंडोवकरणेहिं दुक्खसयसमुदीरणेहिं संकोडमोडणाहिं बज्झंति मंदपुन्ना, संपुडकवाड-लोहपं-

वचनानि अतिकर्कशभणितानि तानि च तर्जनानि वचनविशेषा गलच्छलत्ति गलग्रहणं तया या उल्लुच्छणा-अपवर्तना, ताभिर्मनसो विरुद्धचित्ताः चारकवसतिं-गुप्तिगृहं प्रवेशिताः, किंभूतां तां नारकावाससदृशां। तत्राऽपि गुल्मिकस्य गुप्तिपालस्य सम्बन्धिनो ये प्रहाराः-घाता दूमनानि तापकारिणी निर्भर्त्स्यनीया आक्रोशविशेषाः कटुकवचनानि तैर्वा भेपणकानि-भयजनकानि चरंति तैः पराभूताः पाठान्तरे एभ्यो यद्भयं तेन अभिभूताः, आकृष्टपरिधानवस्त्राः मलिनं कच्चरं दंडिवत् चारकवत् खण्डरूपं वसनं वस्त्रं येषां ते तथा, उत्कोटाः लञ्चया द्रव्यवहुत्वेन लञ्चाः राजदेयद्रव्यं, पार्श्वे गुप्तिसमीपं तस्य मार्गणं गवेपणं तस्मिन् परायणैस्तत्परैः तादृशैर्गोल्मिकभटैर्गुप्तिपालकैः विविधैरनेकप्रकारैः बन्धनैः कृत्वा किं तत् बन्धनं ? हड्डित्ति काष्टमयवन्धनं निगडानि लोहमयानि वालरज्जुका, कुदण्डकः काष्टमयप्रान्तरज्जुः वरत्रा चर्ममयरज्जुः, लोहसंकला-हस्तयोः उडुकं काष्ठमयवन्धनं दसकला, वर्ध्रनपट्टः

१ निवसणा प्र. १ सांकळी इति भाषा. २ गवादिवालमयरज्जुरासि इति लोक भापा. ३ कोरडो इति भाषा. ४ अढील इति भाषा.

जर-भूमिघर-निरोह-कूव-चारग-कीलग-जूय-चक्कविततबंधणखंभालणउद्धचलणबंधणविहम्मणाहि य विहेडयन्ता, अवकोडकगाढउरसिरबद्ध-उद्धपूरित-अशुभ परिणयाय-फुरंतउरकडगमोडणामेडणाहिं बद्धा य नीससंता,

चेर्म्मपट्टिका दामकं पादसंयमनरूपं निःकोटनं वैन्धनविशेषः तैर्बन्धनैः अन्यैरपरैः इत्येवमादिकैः गोलिमकगुप्तिपालानां भांडोपकरणैः गुप्तिकपरिकरविशेषैः, दुःखशतसमुदीरकैः दुःखोदीरणप्रवर्त्तकैः संकोचनं हस्तपादादीनां मोटनं गात्रादीनां अवनामनं तैः कृत्वा वध्यन्ते। के मन्दपुण्याः संपुटं कोष्ठागारं कपाटं अररि लोहपञ्जरं लोहापट्टगृहं भूमिगृहं निरोधस्तेषु प्रवेशनं, कूपो जलभृतगर्त्ता चारको वन्दीगृहं, खाणुकाः कीलकाः, युपा, युगचक्राणि रथांगचितत्वं वन्धनं प्रमर्दितं बाहुजङ्घाशिरःसंयन्त्रणं स्तम्भास्फालनं आलिंगणं पुनः उर्ध्वचलनस्य यत् बन्धनं एतेषां पदानां सर्वत्र द्वन्द्वः विधर्माणः धर्महीनाः नराः विविधा या कदर्थना ताभिः कदर्थनाभिः विहेडयंति,त्ति विहेठ्यमाना वाध्यमानाः संकोटितमोटिताः क्रियन्ते इति सम्बन्धः। अवकोटनेन अधोनयनेन वा गाढं-अत्यर्थं उरसि हृदये शिरसि-मस्तके च ये बद्धास्तेन तथा ते च ते उर्ध्वपूरिताः-श्वासपूरीतोर्ध्वकायाः उर्ध्वावस्थिता धूल्या पूरिता वा पाठान्तरे अथवा उर्ध्वपुरीयत्ति अन्त्राणि स्फुरदुरःकटकाश्च-कम्पमानाः चक्षुःस्थला इति द्वन्द्वस्तादृशा अशुभपरिणता अशुभाशयाः सन्तः किं प्राप्नुवन्ति पाठान्तरे उद्धपुरीय उरुकडगमोडणाहिं पाठः तत्र व्याख्यानं पूर्वपदे व्याख्यातं पुनः कीदृशाः

---

१ दडा इति लोकभाषा. २ गळा दामणा इति भाषा. ३ भुहरुं लोक भाषा.

**सीसावेढउरुयावलचप्पडगसंधिबंधण–तत्तसलागसूइयाकोडणाणि तच्छणविमाणणाणि य खारकडुयतित्तनावणजायणाकारणसयाणि बहुयाणि पावियंना, उंरक्खोडोकादिन्नगाढपेल्लण अट्ठिकसंभग्गसुपंसुलीगा, गलकालकलोहदंडउरउदरवत्थिपरिपीलिता, मच्छितहियंयसंचुण्णियंगमंगा, आणत्तीकिंकरेहिं, केति अविराहिय-**

स्फुरंतो दीप्यमानाः उरवो महत्तमा ये कटकामोटना गात्राणां तैः कृत्वा तथा बद्धाश्च सन्तो निःश्वासान् विमुञ्चतः । शिरोवेष्टनं उर्वोः जंघयोर्यत् दारणं विदारणं ज्वालावत् ज्वलनं यः स तथा । पाठान्तरे उरुयावलत्ति तत्र उरूणां कायस्य च वलनं उरुकायावलनं यथा भवति तथा च कपाटानां काष्ठविशेषाणां सन्धिषु–जानुकुर्प्परादिषु यद्बन्धनं तप्तलोहशलाकानां या शूचिकावत् तीक्ष्णानि यानि [1]यंत्राणि तेषां कुट्टनानि अंगप्रवेशनानि ते। तैक्ष्णं काष्ठस्यैव विमाननानि कदर्थनानि मर्मस्थानपीडनानि क्षाराणि तिलपर्पटक्षारादीनि कटुकानि मरीचादीनि तिक्तानि निम्बादीनि तैः कृत्वा यत् नावणं तस्य दानं तदादीनि यानि यातनानां पीडोत्पादकानां कारणशतानि कदर्थनाहेतुशतानि बहूकानि प्राप्यमाणाः सन्तः । तथा उरसि वक्षसि खोडत्ति महाकाष्ठं तस्यादत्ता या वेदना तस्याः पेल्लणं प्रेरणं गाढप्रहरणं वा तेन अस्थिकानि–हड्डकानि तेन संभग्नानि। पंसुलिकानि पार्श्वास्थीनि येषां ते तथा, गल इव बडिश इव घातकः स चाऽसौ कालकलोहदण्डकश्च–कालायसयष्टिः तेन कृत्वा उरसि–वक्षसि उदरे–जठरे बस्तौ–गुह्यप्रदेशे पृष्ठौ च पृष्ठे परिपीडिता ये ते तथा। मच्छित्ति मथ्यमानं हृदयं येषां ते तथा संचूर्णितानि निशीर्णविशीर्णकृतानि अङ्गानि

१ उरक्खाडा प्र० १ अग्राणि० प्र० २ तांछ्वुं भाषा.

**वेरिएहिं जमपुरिससन्निहेहिं पहया ते तत्थ मंदपुण्णा चडवेला वज्झपट्ट पाराइंछिव-कस-लत्तावरत्तनेत्तप्पहारसयतालियंगमंगा, किवणा, लंबंत चम्मवणवेयणविमुहियमणा, घणकोट्टिमनियलजुयलसंकोडियमोडिया य कीरंति, निरुच्चारा असंचरणा एया अन्ना य एवमादीओ वेयणाओ पावा पावेंन्ति ॥**

येषां ते तथा। आज्ञां ग्राहितैः किंकरैर्यथादेशकारिभिः वैरिगणैरपराधिताः केचन इह चकारस्य छांदसत्वात् छकारादेशा यथा पुण्णस्स कच्छईत्यत्र अनपराद्धा एव केऽपि वैरिगणैः यमपुरुषसदृशैः क्रूरैरित्यर्थः, प्रकर्षेण हताः, तत्र नारकगतिसदृशचारकबन्धने ते अदत्तहारिणो मन्दपुण्या निर्भाग्याः चंडवेलाः चपेटाः, [1]वध्रपट्टश्चर्मविशेषा पट्टिका पागरा लोहकुशीविशेषा। छिवित्ति तक्षणलोहशस्त्रं। कपश्चर्मयष्टिका लत्ता-पाद दाम वस्त्रा कण्ठबन्धनं चर्ममयीमहारज्जुः [3]वेत्रो जलवंशः तेषां द्वन्द्वः एभिर्ये प्रहारास्तेषां यानि शतानि तैस्ताडितानि अङ्गोपाङ्गानि येषां ते तथा। कृपणा दुःस्थाः तथा लम्बमानचर्माणि यानि व्रणानि क्षतानि तेषु या वेदना-पीडा तया विमुखीकृतं चौर्याद्विरतं मनो येषां ते तथा। घनेन-अयोमयेन मुद्गरेण कुट्टनं, येषां ते तथा निगडयुगलेन श्रृङ्खलाद्वयेन संकोटिताः संकुचिता मोटिताश्च-भग्नांगा येपु ते क्रियन्ते इति पदं किङ्करैः सह योज्यं तैः कीदृशास्ते क्रियन्ते निरुच्चाराः निरुद्धपुरीपोत्सर्गाः अविद्यमानसंचरणा वचनोच्चारेणाऽपि किं पुनर्निर्गमनायेति। एता व्यावर्णिता अन्या अपि

१ प्रत्यन्तरे नास्ति
२ पाशा इति भाषा. ३ नीकोर वंश इति भाषा.

अदन्तिंदिया वसट्टा, बहुमोहमोहिया, परधणंमि लुद्धा, फासिंदियविसयतिव्वगिद्धा, इत्थिगयरूवसद्दरसगंध—इट्ठरतिमहितभोगतण्हाइया, य धणतोसगा, गहिया य जे नरगणा। पुणरवि ते कम्मदुव्वियद्धा उवणीया रायकिंकराण तेसिं वहसत्थगपाढयाणं, विलउलीकारकाणं, लंचसयगेण्हगाणं, कूडकवडमायानियडिआयरणपणिहिवंचणविसारयाणं, बहुविहअलियसतजंपकाणं, परलोकपरम्मुहाणं, निरयगोतगामियाणं तेहि य आणत्तजीयदंडा

---

एवमादिकाः—एवं प्रकाराः वेदनाः—दुःखत्वेन वेद्यरूपाः पापाः—पापफलभूताः पापकारिणो वा प्राप्नुवन्ति । अदमितानि इन्द्रियाणि येषां ते अदान्तेन्द्रिया वशवर्त्तिनः विषयपारतन्त्र्येण पीडिताः वशार्त्ताः बहुमोहमोहिताः प्रचूराज्ञान-मूढाः, परेषां यत् धनं तत्र लुब्धाः—गृद्धाः, स्पर्शनेन्द्रियविषये स्त्रीकलेवरादौ तीव्रं—अत्यर्थं गृद्धाः—अध्युपपन्ना ये ते तथा। स्त्रीगता ये रूपशब्दगन्धरसाः तेषु वांछिता या रति तथा स्त्रीगत एव मोहितः—ईप्सितो यो भोगो निधुवनं तयोः या तृष्णा—आकांक्षा तया अर्दिता बाधिता, तथा धनेन तुष्यन्ति ते धनतोषकाः तथा स्तेनाश्चौराः तत्कर्मस्तैन्यं तेन कृत्वा यद्धनं तेन तुष्टहृदयाः, गृहीताश्च राजपुरुषैरिति गम्यते ये केचन मानवसमूहाः। पुनरपि ते कर्मदुर्विदग्धाः कर्मसु—पापक्रियासु विषये फलपरिज्ञानं प्रति दुर्विदग्धाः। उपनीताः ढौकिताः केषां राजनराणां अर्पिताः ये निर्दयादिधर्मयुक्तास्तेषां, तथा वधशास्त्रपाठकारिणां, विटपोल्लकनृणां विटला न्यायवर्जिता तत्कारणभूतानां लञ्चाशतग्राहकाणां। कूटं-मानादीनामन्यथाकरणं कपटं-वेषभाषादिना वैपरीत्यकाणं माया-विप्रतारणं निकृतिः-बुद्ध्यात्मदोषप्रच्छादनार्था एतासां यदाचरणं प्रणिधिना वञ्चनं तत्र विशारदा दक्षाः ये ते तथा तेषां बहुविधं बहुप्रकारं यत् अलीकशतं-मिथ्याभाषणं तत्प्रतिजल्पकानां

तुरियं उग्घाडिया पुरवरे सिंघाडग तिय-चउक्क-चच्चर-चउम्मुह-महापहपहेसु वेत्तदंडलउडकट्ठलेट्ठु-पत्थर-पणालि-पणोल्लि-मुट्ठिलया-पादपण्हि-जाणु-कोप्पर-पहारसंभग्गमहियगत्ता, अट्ठारसकम्मकारणा, जाइयंग-

परलोकपराङ्मुखानां नरकगतिगामिकानां तैश्च राजपुरुषैः आज्ञप्तं-आदिष्टं [1]दुष्टनिग्रहविषयगोचरेण दण्डः प्रतीतः जीतदण्डो वा रूढदंडो जीवदण्डो वा-जीवितनिग्रहलक्षणो वा येषां ते । तथा त्वरितं शीघ्रं उद्घाटिताः-प्रकाशिताः पुरवरे शृङ्गाटिकादिषु वा ये ते तत्र शृङ्गाटकं, त्रिकरथ्यामीलनस्थानं त्रिकोणं, चत्वरं चतुरथ्यामीलनस्थानं, चच्चरं-रासमण्डलस्थानं गायकानां, चतुर्मुखं तथाविधदेवकुलिकादि, महापथो राजमार्गः, पन्थाः-सामान्यमार्गः किंविधाः सन्तः ? वेत्रं-[1]रज्जुः दंडो-लकुटः काष्ठं लेष्टु मृत्तिकामयदढखंडः, प्रस्तरः पाषाणः, पणाल्लित्ति प्रकृष्टा शरीरप्रमाणा नाली,दीर्घतरा यष्टिः पणोल्लिका ताडनदण्डः, मुष्टिः-संपिण्डिताङ्गुलिहस्तः, अश्वभ्रमणमत्रतो रज्जुग्रहणार्थं । पार्ष्णिः-पदपश्चाद्भागः, जानुः-कोर्प्परः, कूर्णिका एभिर्यैः प्रहारास्तैः सभग्नानि-मर्दितानि मथितानि वा विलोडितानि गात्राणि येषां ते तथा । अष्टादशकर्मकरणात्-अष्टादशचौरप्रसूतयः तासां लक्षणमिदं प्रज्ञाप्यते ।

चौरः१ चौरार्पको २ मन्त्री ३, भेदज्ञः४ काणकक्रयी ५ ।अन्नदः ६ स्थानद ७ श्चैव,चौरः सप्तविधः स्मृतः॥ १॥तत्र काणकक्रयीति कोऽर्थः बहुमूल्यं वस्तु चौरानीतं काणकं-हीनं कृत्वा स्वल्पमूल्येन गृह्णाति स काणकक्रयीति । तत्र अष्टादशप्रसूतिर्यथा-

भलनं १ कुशलं २ तर्जा ३, राजभागोऽ ४ वलोकनं ५ । अमार्गदर्शनं ६ शय्या ७, पदभङ्ग ८ स्तथैव च ॥१॥
विश्रामः९ पादपतन १० मासनं ११ गोपनं १२ तथा। खण्डस्य खादनं १३ चैव, तथाऽन्यन्माहराजिकम् १४॥२॥
पद्याऽ १५ ग्न्यु १६ दक १७ रज्जूनां १८, प्रदानं ज्ञानपूर्वकं। एताः प्रसूतयो ज्ञेयाः, अष्टादश मनीषिभिः ॥ ३ ॥

[1] नीतं दुष्टनिग्रहविषयगोचरितं [1] राढु इति भाषा

मंगा, कलुणा, सुक्कोट्ठकंठगलकतालुजीहा, जायंता, पाणीयं विगयजीवियासा, तण्हादिया, वरागा तंपिय ण लभंति वज्झपुरिसेहिं निधाडियंता ?

तत्थ य खरफरुसपडहघट्टितकूडग्गह–गाढरुट्ठनिसट्ठपरामुट्ठा, वज्झकरकडिजुयनियत्था, सुरत्तकणवीरग-

---

तत्र भलनं न भेतव्यं भवता अहमपि तद्विषये भलिस्यामीत्यादिवचनैः चौरस्य प्रोत्साहनं १ कुशलं–सुखदुःखपृच्छा २ तर्जा–हस्तादिभिश्चौराणां संज्ञाकरणं ३ [1]राजभागाऽप्रदानं ४ अवलोकनं–हरतां चौराणां दर्शितानामप्युपेक्षा ५ बुद्ध्या चौराणामुन्मार्गादिदर्शनं ६ चौराणां शय्यादानं७पदभङ्गः-खात्रमुखे पशुप्रचारादिना८तथैव विश्रामणं९पादपतनं१०आसनदानं११गोपनं वार्त्तादिना तत्करणाच्छादनं १२खण्डखादनं मण्डकादिभक्तदानप्रयोगः१३माहाराजिकं लोकप्रसिद्धया परराष्ट्रे गत्वा विक्रयः१४[2]पद्या मार्गदानं १५ अग्निदानं १६ उदकदानं १७ पश्वादिबन्धनार्थं रज्जुप्रदानं १८ चौर इति ज्ञात्वा यत्प्रदानं तत् ज्ञानपूर्वकमिति चौरप्रसूतयः तैः कारणैर्हेतुभिः कृत्वा [3]यापिता–कदर्थिताङ्गोपाङ्गाः बाहूरुपृष्टि–उर–उदर–शिरः प्रभृतीन्यङ्गानि अङ्गुल्यादीनि उपाङ्गानि कचश्मश्रु–अंत्र–वसाप्रभृतीनि अङ्गोपङ्गानीति ज्ञेयं राजपुरुषैरिति गम्यं । कलुणा–करुणा दीनत्वेन वा कलुणा पापेन मलिनाः, शुष्कौष्ठगलतालुजिह्वाः, याचमानाः पानीयं–नीरं विगतजीविताशाः, तृष्णार्दिताः-पिपासापीडिताः, [4]वराकादीनां तदपि नीरमात्रमपि न लभन्ते । पुनः कीदृशाः ? वध्येषु नियुक्ता ये पुरुषाः वध्या वा पुरुषा येषां तैः निर्धाड्यमानाः-प्रेर्यमाणाः, तत्र च धाडनेन खरपुरुषोऽत्यर्थं यः कठिनः पटहको-डिंडिमकः तेन प्रचलनार्थं पृष्ठदेशे घट्टिताः प्रेरिता ये ते, कूटे ग्रहः कूटग्रहत्वेनससलोप्त्रधनार्कितेन गाढा–अत्यर्थं ये रुष्टास्तैर्निःभृष्टं

---

१ दाणचोरी इति भाषा २ पद्यं उष्णजलतैलादि तस्य दानं प्रत्यन्तरे ३ कम्पिता क प्रतौ ४ राकडा इति भाषा

हिय-विमुकुलकंठेगुण-वज्झदूतआविद्धमल्लदामा, मरणभयुप्पण्णसेदआयतणेहुत्तुपियकिलिन्नगत्ता, चुण्णगुंडियसरीर-रयरेणुभरियकेसा, कुसुमगोरवन्नमुद्धया [कुसुंभगोकिन्नमुद्धया] छिन्नजीवियासा, घुन्नंत्ता, वज्झपाणपीया, तिलं तिलं चेव छिज्जमाणा, सरीरविकिन्तलोहिओलित्तकागणिमंसाणि खावियंता, पावा, खरकरसएहिं तालिज्जमाणदेहा, वातिकनरनारिसंपरिवुडा, पेच्छिज्जंता य नागरजणेण वज्झनेवत्थिया पणोज्जंति नयरमज्झेण किवणकलुणा, अ-

अपगतधनं यथा स्यात्तथा परामृष्टा-गृहीता ये ते तथा कर्मधारयः सर्वत्र। वध्यसम्बन्धिनी यत्करकटीयुगं वस्त्रयुगलं तन्निवसिताः-परिहिताः, तथा सुरक्तकणवीरैः-कुसुमविशेषैः ग्रथितं-गुम्फितं विमुकुलं-विकसितं कण्ठे गुण इव कण्ठेगुणः कण्ठसूत्रसदृशमित्यर्थः। वध्यदूतमिव इत्यर्थः आविद्धं-परिहितं माल्यदाम-कुसुममाला येषां ते। मरणभयात् उत्पन्नो यः स्वेदस्तेन आयतमाऽऽयामवद्यथा भवति तथा स्नेहेन उत्तुपितानीव स्नेहितानीव क्लिन्नानि चार्द्रीकृतानि गात्राणि येषां ते तथा। चूर्णेनाऽङ्गारादीनां भस्मना गुण्डितं शरीरं येषां ते तथा। रजसा-वातायनस्थेन रेणुना धूलीक्षेपणेन भरिताः केशा येषां ते तथा। कुसुमवत् गौरवर्णमुर्द्धजाः कुसुमं गौरवर्ण्णं यथा स्यात्तथा, उद्धताः पापकर्मणा उत्कटाः छिन्ना छेदिता जीवितव्यस्य आशा यैस्ते तथा, घूर्णमानाः भयविह्वलत्वात्, वध्याः हन्तव्या एव प्राणा एव प्रीताः-सन्तुष्टभावेन येषां ते, तिलंतिलं छिज्जमाणा इति व्यक्तं। शरीराद्विकृतानि लोहितावालिप्तानि रक्तलिप्तानि यानि काकिणीमांसानि-श्लक्ष्णखण्डपिशितानि तानि खाद्यमानाः पापाः-पापिनः, खरकरशतैः श्लक्ष्णपाषाणभृतात-चर्मकोशकविशेषैः स्फुटितवंशशतैर्वा ताड्यमानदेहाः, वातो रोगो येषां ते वातिकाः, अनियन्त्रिता इत्यर्थः तैर्नरनारीभिः समन्तात् परिवृताः, प्रेक्ष्यमाणाश्च दृश्यमानाः नागरिकजनेन, वध्यनेपथ्यं-घातयोग्यवस्त्रं येषां ते वध्यनेपथ्यकाः, प्रणोद्यन्ते-नीयन्ते नगरमध्येन-संनिवेशमध्यभागेन

त्ताणा, असरणा, अणाहा, अबंधवा, बंधुविप्पहीणा, विपिक्खिता, दिसोदिसिं मरणभयुव्विग्गा, आघायणपडिदुवारसंपाविया, अधन्ना, सूलग्गविलग्गभिन्नदेहा,

ते य तत्थ कीरंति परिकप्पियंगमंगा उल्लंबिज्जंति रुक्खसालासु, केइ कलुणाइं विलवमाणा, अवरे चउरंगधणियबद्धा पव्वयकडगा पमुच्चंते दूरपातबहुविसमपत्थरसहा, अन्ने य गयचलणमलणयनिम्मद्दिया कीरंति, पावकारी अट्ठारसखंडिया य कीरंति मुंडपरसूहिं, केइ उक्कत्तकन्नोट्ठनासा, उप्पाडियनयणदसणवसणा, जिब्भिंदिय-

---

कृपणानां मध्ये करुणाः कृपणकरुणाः अत्यन्तं करुणा इत्यर्थः। अत्राणा अनर्थप्रतिघातकाऽभावात्, अशरणाः—गतस्वामिनो अगृहा वा, अनाथाः—योगक्षेमकारिरहितत्वात्, अबान्धवाः—अहितकारित्वात् बान्धवैर्विरहितत्वात् बन्धुभिः प्रहीणाः, विप्रेक्ष्यमाणाः-पश्यन्तः एकस्या दिशः सकाशात् अन्यां दिशं पलायनायेति शेषः। मरणभयेन उद्विग्नाः ये ते तथा, आघातनस्य—वध्यभूमिमण्डलस्य प्रतिद्वारमेव संप्रापिता ये ते तथा, अधन्याः—क्षतसुकृतयः शूलिकाया अग्रं प्रासं शूलिकाग्रं तस्मिन् विलग्नः प्रोतः तेन भिन्नं—दारितं देहं येषां ते, तत्र आघातने क्रियन्ते ते कीदृशाः? क्रियन्ते राजपुरुषैरित्याह-परिकल्पिताङ्गोपाङ्गाः च्छिन्नावयवाःपुरुषैरित्याह-उल्लम्ब्यन्ते वृक्षशाखासु, केऽपि—केचन करुणानि वचनानि हे तात! मातेत्याक्रन्दस्वरं विलपवन्तः तथा, अपरे पुनःचतुष्काङ्गेषु हस्तपादलक्षणेषु धणियं—गाढं बद्धा ये ते, पर्वतकटकात्—भृगोः मुच्यन्ते दूरापातं—पतनं बहुविषमप्रस्तरेषु-अत्यन्तविषमपाषाणेषु सहन्ते ये तथा,अन्येऽपि-पुनः गजचलण—करिचलणमलनेन ताड्यन्ते तथा, पुनः कीदृशाः क्रियन्ते? निर्मर्दिता—दलिता ये ते तथा, पुनः कीदृशाः क्रियन्ते? पापकारिणश्चौर्यविधायिनः अष्टादशस्थानेषु खण्डिता ये ते, ते च क्रियन्ते? कैरित्याह? कुण्ठ—भग्नधारकुठारेण तीक्ष्णैर्हेतिभिः शस्त्रैर्नात्य-

छिया, छिन्नकन्नासिरा पणिज्जंते छिज्जन्ते य, असिणा निव्विसया छिन्नहत्थपाया पमुचंते, जावज्जीवबंधणा य कीरंति, केइ परदव्वहरणलुद्धा, कारग्गलनियलजुयलरुद्धा, चारगावहतसारा, सयणविप्पमुक्का मित्तजणनिराक्खिया, निरासा, बहुजणधिक्कारसद्दलज्जायिता [ अलज्जाविया ] अलज्जा, अणुबद्धखुहा, पारद्धा, सीउण्हतण्हवेयणदुग्घट्टघट्टिया, विवन्नमुहविच्छविया, विहलमलिनदुब्बला, किलंता, कासंता, वाहिया य आमाभिभूय गत्ता.

---

न्तवेदनोत्पद्यते इति, मुंडेति पदं कुण्ठवाचकं केऽपि च उत्कीर्ण्णा कृन्ताः च्छिन्नाः कर्णौष्ठनासाः, च्छिन्नश्रवणदशनच्छदघ्राणाः, उत्पाटितानि नयनदशनवृषणानि जिह्वा–रसना आञ्छिता–आकृष्टा, च्छिन्नौ कर्णौ शिरश्च शिरा वा-नाड्यो वा येषां ते तथा, प्रणीयन्ते आघातस्थानमिति गम्यन्ते, च्छिद्यन्ते असिना–खड्गेन तथा निर्विषयाः-देशान्निष्काशिताः, च्छिन्नहस्तपादाश्च प्रमुच्यन्ते-राजकिङ्करैस्त्यज्यन्ते, तथा यावज्जीवं बन्धनाश्च क्रियन्ते। केचित् अपरे के इत्याह ? परद्रव्यहरणलुब्धा इति प्रतीतं, कारार्गलया– चारकपरिघेन निगडयुगलैश्च रुद्धाः-नियन्त्रिता ये ते तथा, चारके–गुप्तौ किंविधाः सन्तः इत्याह ? हृतसाराः–स्वकीया ज्ञातयस्तै रहिताः, मित्रजनैः निराकृता–धिक्कृता इत्यर्थः, अतएव निर्गताशाः–अप्राप्तेष्टफलाः, बहुजनधिक्कारशब्देन लज्जापिताः-प्रापितलज्जा ये ते, परं अलज्जा–विगतलज्जा धृष्टत्वात् पापं नैव मुञ्चन्तीत्यर्थः, अनुबद्धक्षुधा–सततं बुभुक्षया प्रारब्धा-अभिभूता अपराद्धा वा शीतोष्णपिपासावेदनया दुर्घटितघट्टिताः दुराचारैर्घट्टिताः चेष्टासञ्ज्ञाः, विवर्णाः–श्यामिकायुक्तमुखाः, विगतच्छवि–शरीरत्वग् येषां ते तथा, विफला अत्र अनिष्टफला मलिना–मलिमसाः दुर्बला–असमर्थाश्चेति, क्लिश्यमानाः, तथा किंभूताः ? काशरोगविशेषेण कुत्सितशब्दं कुर्वाणाः तथा स्पर्शमानाः पापकर्मभिः व्याधिताः-संजातकुष्ठादिरोगाः, तथा आमेन–अपक्वरसेन अभिभूतानि गात्राणि येषां ते, रसमूलाश्च व्याधयः।

परूढनहकेसमंसुरोमा छगमुत्तंमि णियगंमि खुत्ता ॥

तत्थेव मया अकामका, बंधिऊण पादेसु कड्ढिया खाइयाए छूढा, तत्थ य विग–सुणग–सियाल–कोल–मज्जार चंडसंदंसगतुंडपक्खिगण–विविहमुहसयलविलुत्तगत्ता, केइ विहंगा, केइ किमिणा य कुहियदेहा, अणिट्ठवयणेहिं सप्पमाणा, सुट्ठु कयं जं मउत्ति पावो तुट्ठेणं जणेण हम्ममाणा, लज्जावणका च होंति सयणस्सविय-दीहकालं मया संता, पुणो परलोगसमावन्ना नरए गच्छंति निरभिरामे अंगारपलित्तककप्प–अच्चत्थसीतवेदण

प्ररूढानि—वृद्धिं प्राप्तानि अनिबद्धानि संस्काराभावात् नख–केशश्मश्रु–कूर्चरोमाणि येषां ते, छगं–पूरीषं मूत्रं–प्रस्रावस्ते स्वकीये तस्मिन् निक्षिप्ता-निमग्नाः तत्रैव चारकबन्धने मृता अकालमरणे न तदभिलाषात्, तस्मात् चारकबन्धनात् कर्षिता रज्ज्वा पादौ बन्धयित्वा निष्काशिताः, [1]खातिकायां प्रक्षिप्ताः, तत्राऽपि [2]वृकाः, शूनकाः, शृगालाः, कोला–महदुंदिराः, मार्जाराः तेषां वृन्दं तस्य सन्दंशकतुण्डपक्षिगणस्य कृपारहितवृकादिभिः खण्डशः कृता इत्यर्थः, विविधमुखशतैः विलुप्तानि खुरखुरेति कृत्वा भक्षितानि गात्राणि येषां ते तथा । केऽपि विहङ्गाः गृध्रश्येनादयः, केऽपि कृमिवन्तो कुथितदेहाः जीवन्त एव विनष्टशरीराः, अनिष्टखरपुरुषवचनैः [3]शाप्यमानाः, कथमित्याह ? सुष्ठु सम्यक्कृतं अस्य कदर्थनं यतो हेतोः अयं मृतो मारितो वा, एषः पापः–पापात्मा, तुष्टेन जनेन हन्यमानाः, अयं पापो मारणीय एवेति तुष्टत्वं [4]लज्जापनका–लज्जावहा भवन्ति, न केवलं अन्येषां किन्तु स्वकीयसम्बन्धिकुटुम्बजनस्याऽपि-दीर्घकालं यावत् कुलांगाराः मृताः सन्तोऽपि पुनः परलोकं समापन्नाः--परभव प्राप्ता अपि नरके निर्गतरमणीये–अमनोज्ञे एवेत्यर्थः,

१ खाई इति लोकभाषा २ वरगडा इतिभाषा ३-श्रापा इति लोकभाषा ४ लजुयाला इति लोकभाषा कुललज्जा मा हार इति भाषा

–अस्साउदिन्नसय–तदुक्खसयसमभिद्दुते। ततोवि उव्वट्टिया समाणा पुणोवि पवज्जंति तिरियजोणिं, तहिंपि निरयोवमं अणुहवंति वेयणं, ते अणंतकालेण जति नाम कहिंवि मणुयभावं लभंति णेगेहिं णिरयगतिगमण-तिरियभवसयसहस्सपरियट्टेहिं ॥

तत्थविय भमंतऽणारिया नीचकुलसमुप्पण्णा आरियजणेवि लोगवज्झा तिरिक्खभूता य अकुसला कामभोगतिसिया जहिं निवंधंति निरयवत्ताणिभवप्पवंचकरणपणोल्लिया पुणोवि संसार(रा)वत्तणेममूले धम्मसुतिविवज्जि-

पुनः कीदृशे ? अङ्गारः–धूमज्वालारहितवह्निः तत्प्रदीपकल्पं तत्तुल्यस्तदुपमो यः पुनः कीदृशे ? अत्यर्थं शीतवेदना–हिमकालोद्भवशीतस्य वेदना तेन रुद्धोत्श्वासनिःश्वासकर्मणा तेभ्यः उदीर्णं प्रगटीभूतं यद् दुःखशतं तैः समभिभूतः–उपद्रुतो यः स तस्मिन्, ततः नरकात् उद्धृताः सन्तः पुनरपि प्रपद्यन्ते तिर्यग्योनिं, तत्राऽपि तत्र गताऽपि नरकोपमां वेदनां अनुभवन्ति पूर्वोदितां एव वेदनां अदत्तग्राहिणः। ते पुनः अनन्तकालेन यदि कदाचित् नाम निश्चितं कथमपि महता कष्टेन मनुष्यभावं लभन्ते–प्राप्नुवन्ति,न एकेषु किंतु अनेकेषु भवेषु निरयगतौ यानि गमनानि तिरश्चां ये भवास्तेषां शतसहस्रसंख्यापरिवर्त्तनं–भ्रमणं तेषु अतिक्रान्तेषु सत्स्विति गम्यते। तत्राऽपि भ्रमन्तो ये (मनुजत्वलाभे) लाभा भवन्ति तानाऽऽह–अनार्याः–शक–यवन-बर्बरादयः, किंभूताः? नीचकुलसमुत्पन्नाः आर्यजनेऽपि मगधादौ समुत्पन्ना इति शेषः, तत्राऽपि लोकबाह्या-जनवर्जनीया भवन्ति, तिर्यग्भूताश्च पशुकल्पा इत्यर्थः, निर्विवेकत्वात् अकुशलास्तत्त्वेषु अनिपुणाः कामभोगेषु तृषिता इत्यर्थः, नरकादिप्रवृत्तौ यदि मनुजत्वं लब्धं यस्मिन् समनुजत्वेऽपि निबन्धन्ति–चिन्वन्ति, नरकमार्गं एव भवप्रपञ्चकरणेन तत्रैव गमनहेतुकारणतः मृगापुत्रवत् जन्मप्राचूर्यकरणतः प्रणोदिताः प्रेरिताः पापकर्मभिरिति शेषः, अत्र पणो-

या अणज्जा कूरा मिच्छत्तसुतिपवन्ना य होंति एगंतदंडरुइणो वेढेंता कोसिकारकीडोव्व अप्पगं अट्ठकम्मतंतुघणबंधणेणं एवं नरगतिरियनरअमरगमणपेरंतचक्कवालं जम्मजरामरणकरण-गम्भीरदुक्खपक्खुभियपउरसलिलं, संजोगवियोगवीचीचिंतापसगपसंरिय-वह-बंधमहल्लविपुलकल्लोलकलुणविलवित-लोभकलकलिंतबोलबहुलं, अ-

ह्लित्ति तत्प्रवर्त्तकानि करणानि अत्र द्वितीयाबहुवचनलोपो द्रष्टव्यः आर्षत्वात् । पुनरपि संसारो भवति तदेव निमी-मूलधननिमित्तं येषां तानि दुःखानीति भावः मूलानि तानि तथा कर्माणीत्यर्थः, तानि बध्नन्तीति संटङ्कः। इह च मूलाइं इति वाच्ये मूल इति उक्तं,प्राकृतत्वेन लिङ्गव्यत्ययः ते कीदृशाः सन्तो बध्नन्ति धर्मश्रुतिविशेषेणवर्जिताः, योगेऽपि अनादरपरा, मत्सरग्रस्तत्वात्, वर्जिता-धर्मशास्त्रविकलाः, अनार्या आर्येतराः, क्रूराः जीवोपघातदेशकत्वात्, पुनः कीदृशाः ? मिथ्यात्वप्रधाना-विपरीततत्त्वोपदेशकाः श्रुतिः-सिद्धान्तस्तां प्रपन्नाः--अभ्युपगतास्ते कीदृशाः भवन्ति? एकान्तदण्डरुचयः-सर्वथा हिंसनश्रद्धाः, ते किं कुर्वन्तो वेष्टयन्तः ? कोशिकाकारकीट इव आत्मानं अष्टकर्मलक्षणैस्तन्तुभिर्यत् घनं-निबिडं बन्धनं-दमनं तेनेत्यर्थः, एवं अनेन आत्मनः कर्मभिर्बन्धनेन नरकतिर्यग्-मनुष्य-देवगमनेन यद्गमनं गत्यादिप्ररूपणं तदेव पर्यन्तचक्रवालबाहा-परिधिर्यस्य स तं संसारसागरं भ्रमन्तीति सम्बन्धः। जन्मजरा--मरणकारणानि-साधनानि यस्य तं, तच्च तद्गम्भीरं दुःखं च तदेव प्रक्षुभितं-संचालितं प्रचुरं सलिलं यत्र तं। तथा संयोगवियोगा एव विचय-स्तरंगा यत्र स तथा, चिन्ताप्रसङ्गश्चिन्तासातत्यं तदेव प्रसृतं-प्रसरो यस्य स तथा,वधा हननानि,बन्धाः-संयमनानि तान्येव महान्तो दीर्घतया विपुला विस्तीर्णतया कल्लोलाः महोर्मयो यत्र स तथा, कलुणो-दीनः विलपितः एव लोभकलकलः एव कलकलायमान-आक्रन्दको ध्वनिलक्षणो यो बोलः श्रोतॄणामसुखकारित्वात् स बहुलः-प्रचुरो यत्र स तथा तं ततः संयोगादिसर्वपदानां कर्मधारयः ।

वमाणणफेणं, तिव्वखिंसणपुलंपुलप्पभूयरोगवेयण–पराभवविणिवातफरुसधरिसणसमावडिय–कठिणकम्मपत्थ-रतरंगरंगंतनिच्चमच्चुभयतोयपट्ठं, कसायपायालकलससंकुलं, भवसयसहस्सजलसंचयं, अणंतं, उव्वेवणयं, अणोरपारं, महब्भयं, भयंकरं, पइभयं, अपरिमियमहिच्छकलुसमतिवाउवेगउद्धम्ममाण--आसापिवासपायाल कामरतिरागदोस-बंधणबहुविहसंकप्पविपुलदगरयरयंधकारं, मोहमहावत्तभोगभममाण-गुप्पमाणुच्छलंत बहुग-

पुन कीदृशे ? अपमानमेवाऽपूजनमेव फेनो यत्र तं, तीव्रखिंसनं अत्यर्थनिंदा पुलत्ति अनवरतोद्भूताः प्रभूता–बहुला या रोगवेदनास्ताश्च परिभवः–पराभवं तस्य विशेषेण विनिपातः पतनं तस्य स्पर्शः–प्रसभं घर्षणानि निष्ठुरवचनानि निर्भर्त्सनानि तानि समापतितानि–समापन्नानि येभ्यस्तानि तथा च तानि, कठिनानि कर्कशानि दुर्भेदानीत्यर्थः कर्माणि–ज्ञानावराणीयादीनि क्रिया वा तान्येव ये प्रस्तराः–पाषाणाः तैः कृत्वा तरङ्गवत् चलनं नित्यं–ध्रुवं मृत्युर्मरणं भयश्चेह लोकादि तदेव तोयपृष्ठं–जलोपरितनभागो यत्र स तथा ततः कर्मधारयः। अथवा अपमानफेनमिति तोयपृष्ठस्य विशेषणं तथा बहुव्रीहिः कार्यः। कष्यन्ते हिंस्यन्ते प्राणिन इति कषः संसारः तस्य आयो लाभः कषायाः–क्रोधादयस्त एव पातालाः–पातालकलशाः महत्तमाश्च केयूर १ यूप २ इश्वर ३ वडवा ४ प्रमुखास्तैः संकुलो यः स तथा तं, भवसहस्राण्येव जलसंचयो यत्र स तं। अनन्तं–अक्षयं नित्यत्वात् अनन्तं, उद्वेगजनकं–उद्वेगकरं, न अर्वाक् तटवत् परतटमिति अणोरपारं, महाभयजनकं दुस्तरत्वात्, भयकरं–मत्स्यादिबाहुल्यात् प्रतिभयं विशेषणत्रयं एकार्थं। पुन कीदृशं ? अपरिमिता–अपरिमाणा ये महेच्छा–बृहदभिलाषा अविरतजनास्तेषां कलुषा–अशुद्धा या मतिः स एव वायुवेगस्तेन उद्धम्ममाणत्ति उत्पाट्य[द्य]मानं यत् तथा तस्य, आशा अप्राप्तार्थस्य संभावना पिपासा-लब्धार्थकाक्षास्ता एव पातालं जलबहुलं पातालाः वातेभ्यः या कामरतिः

ब्भवासपच्चोणियत्तपाणियं, पधावितवसणसमावन्न–रुन्नचंडमारुयसमाहया–मणुन्नवीचीवाकुलित–भग्गफुट्टंतनि-ट्ठकल्लोलसंकुलजलं, पमातबहुचंडदुट्ठसावय–समाहयउद्धायमाणग–पूरघोरविद्धंसणत्थबहुलं, अण्णाणभमंतम-च्छपरिहत्थं अनिहुतिंदिय–महामगर–तुरियचरियखोखुब्भमाण–संतावनिचयचलंत–चवलचंचल–अत्ताणऽसरण-

---

–शब्दादिष्वभिरतिरागद्वेषबन्धनेन बहुविधसंकल्पाश्चेति द्वन्द्वः, तल्लक्षणस्य विपुला अनर्वाक् पारं विस्तीर्णस्वरूपस्य उदकरजसः–उदकरेणोर्यो रयो–वेगस्तेनाऽन्धकारो यः स तथा तं। मोह एव महा आवर्त्तः पयसां भ्रमस्तत्र भोगा एव भ्राम्यन्तो–मण्डलेन सञ्चरन्तो गुप्यन्तो–व्याकुलीभवन्तः उच्छलन्तः बहुलाः प्रचुराः, गर्भवासे मध्यभागे विस्तारं प्राप्ताः सन्तः पश्चात् प्रत्यवनिवृत्ताश्च–उत्पत्य-निपतिताः प्राणिनो–जीवा यत्र जले तत् तथा तं। प्रधावितानि इतस्ततः प्रकर्षेण गतानि यानि व्यसनानि तानि समापन्नाः-प्राप्ता ये ते पाठान्तरेण प्रबाधिताः-पीडिता ये व्यसनसमापन्ना-व्यसनिनस्तेषां यद्रुदितं–प्रलपितं तदेव चण्डमारुतस्तेन समाहताः परस्परं हन्यमाना या वीचयस्तरङ्गास्तेन व्याकुलितं भङ्गैस्तरङ्गैः स्फुटन्–विदलन् अनिष्ठितैः कल्लोलैर्महोर्मिभिः संकुलं जलं-तोयं यत्र स तथा तं। तथा मोहमहावर्त्तभोगरूपादिविशेषणानि द्वन्द्वैः योज्यानि पुनः कीदृशं? प्रमादा–मद्यादयस्ते बहवस्त एव चण्डा-रौद्राः दुष्टाः–क्षुद्राः श्वापदाः–व्याघ्रादयस्तैः समाहता–अभिभूता ये उद्धायमाणत्ति विविधचेष्टासु उत्तिष्ठन्तो ये मत्स्यादयः समुद्रपक्षे–संसारपक्षे पुरुषास्तेषां यः पुरस्समुहस्तस्य ये घोरा–रौद्रा विध्वंसा अनर्था–विनाशलक्षणा अपायास्तैर्बहुलो यः स तथा तं। अज्ञानान्येव भ्रमन्तो मत्स्याः परिहत्थत्ति दक्षाः यत्र स तथा तं। अनिभृतानि अनुपशान्तानि यानि इन्द्रियाणि तान्येव महान्तो मकरास्तेषां यानि त्वरितानि-शीघ्राणि चरितानि-चेष्टितानि खोखुब्भमाणत्ति भृशं क्षुभ्यमानो यः स तथा, सन्ताप-एकत्र शोकादिना कृतः अन्यत्र वाडवाऽग्निना कृतो नित्यं यत्र स तथा, चपलश्चञ्च-

व्वकयकम्मसंचयोदिन्न-वज्जवेइज्जमाण-दुहसयविपाकघुन्नंतजलसमूहं, इड्ढिरससायगारवोहार-गहियकम्मपडिबद्धसत्तकड्ढिज्जमाणनिरयतल-हुत्तसत्तविसन्नबहुलं, अरइरइभयविसायसोगमिच्छत्तसेलसंकडं, अणातिसंताणकम्मबंधणकिलेस-चिक्खिल्लसुदुत्तारं, अमरनरतिरियनिरयगतिगमण-कुडिलपरियत्तविपुलवेलं, हिंसालियअदत्तादाणमेहुणपरिग्गहारंभ-करणकारावणाणुमोदणअट्ठविहअणिट्ठकम्मपिंडितगुरुभारक्कंत-दुग्गजलोघदूरनिबोलिज्जमाण-उम्मुग्गनिमग्गदुल्लभतलं,सारीरमणोमयाणि दुक्खाणि उप्पियंता,सातस्स य परित्तावणमयं उब्बुड्ड-

लः यः स तथा अतिचपल इत्यर्थः, आत्राणानां अशरणानां पूर्वकृतकर्मसंचयानां प्राणिनामिति गम्यं, उदीर्णं-उदयमानं यत् अवद्यं-पापं तस्य यो वेद्यमानः अनुभूयमानः दुःखशतरूपो यो विपाकः स एव घूर्णन्-भ्रमन् जलसमूहो यत्र स तथा, ततोऽज्ञानादिपदानां कर्म्मधारयोऽतस्तं । ऋद्धि-रस-सातलक्षणानि यानि गौरवाणि-अशुभाऽध्यवसायविशेषास्त एव अपहाराः-जलचरविशेषास्तैः गृहीता ये कर्मप्रतिबद्धाः सत्त्वाः संसारपक्षे ज्ञानावरणादिबद्धाः समुद्रपक्षे विचित्रचेष्टाप्रसक्ताः, कड्ढिज्जमाणत्ति आकृष्यमाणा नरका एव तलं-पातालं हुत्तत्ति तदभिमुखं सन्ना इति सत्वकाः-प्राणिनः खिन्नाः-खेदं प्राप्ताः, विखिन्नाः-शोकं प्रापितास्तैः बहुलो य स तथा तं । अरति-अनिष्टप्राप्तौ, रतिः इष्टप्राप्तौ, भयं प्रतीतं, विषादो दैन्यं, शोक इष्टवियोगजन्यः, तदेव प्रकर्षे मिथ्यात्वं-विपर्यासः, एतान्येव शैलाः-पर्वतास्तैः सङ्कटो-विषमो यः स तथा तं । अनादिसन्तानो यस्य कर्मबन्धनस्य तत्तथा, तत्र क्लेशाश्च-रागादयः, तदेव यत् चिक्खिल्लं-कर्दमस्तेन सुष्ठु दुरुत्तारो यः स तथा कर्मधारयः, अमर-नर-तिर्यग्-निरयगतिषु यत् गमनं सैव कुटिलपरिवर्त्तना-वक्रपरिवर्त्तना विपुला-विस्तीर्णा या वेला-जलवृद्धिलक्षणा यत्र स तथा तं । हिंसाऽलीकाऽदत्तादान-मैथुन-परिग्रहलक्षणा ये आरम्भा-व्यापाराः स्वयं कृतानि परैः सह कारापितानि परकृतबहुमतचित्ताह्लादकतया अनुमोदनानि तैः अष्टविधं अष्टप्रकारं ज्ञानावरणीयादि यत् कर्मपिण्डितं संचितं

निवुड्डुयं करेंता, चउरंतमहंतमणवयग्गं, रुद्दं, संसारसागरं अट्ठियं, अणालंबणमपतिट्ठाणमप्पमेयं, चुलसीतिजोणिसयसहस्सगुविलं, अणालोकमंधकारं, अणंतकालं, निच्चं उत्ततथ–सुण्ण–भयसण्णसंपउत्ता वसंति । उव्वि–

तदेव गुरुभारस्तेन आक्रान्ता उत्क्रान्ता ये ते तथा तैर्दुर्गाण्येव-व्यसनान्येव यो जलौघो-जलपूरस्तेन दूरं-अत्यर्थं निबोल्यमानैर्निमज्जमानैः जनैरिति गम्यं यत्र स तं । उन्मग्ननिमग्नैरुर्ध्वाऽधोजलगमनानि तैर्दुर्लभं–दुःप्राप्यं तलं प्रतिष्ठानं यस्य स तं । तत्र शरीरमानसानि दुःखानि उत्पिबन्तः–आसादयन्तः, सातं च सुखं असातपरितापनं दुःखं तेन जनितो यस्तन्मयं, उव्वुडानिव्वुडेत्ति[1]उन्मग्नं निमग्नं च कुर्वन्तः, तत्र सातं उन्मग्नत्वं असातं निमग्नत्वमिति बोध्यं । चतुरन्तं–चतुर्दिग्विभागगतिभेदाभ्यां महान्तं अनवदग्रं अनन्तं रुद्रं–विस्तीर्णं संसारसागरमिति प्रतीतं । किंभूतं इत्याह ? अस्थितानां असंयमस्थितानां अविद्यमानं आलम्बनं–प्रतिष्ठानं त्राणकारणं यत्र तथा तं, एतावता असंयमाधारमित्यर्थः, अप्रमेयं–असर्ववेदिनाऽपरिच्छेद्यं अननुभूतमित्यर्थः [2]चतुरशीतियोनिशतसहस्रगुपिलं–व्याप्तं,

तत्र–योनयो जीवानां उत्पत्तिस्थानानि तासामसंख्यातत्वेऽपि समवर्णगन्धरसस्पर्शानामुत्पत्तिकाले एकत्वविवक्षणादुक्त–सङ्ख्याया अविरोधत्वं द्रष्टव्यं, ओजाहारापेक्षया कार्मणेन सह मिश्रत्वं योनिरित्यर्थः, तत्र गाथे–

पुढवि ७ दग ७ अगणि ७ मारुय ७ एक्केक्क सत्त जोणिलक्खाओ । वणपत्तेय अणंते, दस चउदह जोणिलक्खाओ ॥१॥
विगलिंदिएसु दो दो, चउरो चउरो य नारय सुरेषु । तिरिएसु हुंति चउरो, चउदस लक्खा य मणुएसु ॥२॥ ॥

इति योनिविचारः प्रज्ञापनाया योनिपदादवसेयः तथा च

[3]तैजसकार्मणवन्तो, युज्यन्ते यत्र जन्तवः स्कन्धैः, औदारिकादियोग्यैः स्थानं तद्योनिरित्याहुः ॥ १ ॥

---

१ ऊचा नीचा वुडता इति भाषा  २ चोराशी लक्ष जीवा योनि इति भाषा  ३ द्रव्यलोकप्रकाशे

तथाच—'व्यक्तितोऽक्षयभेदास्ताः, संख्यार्हा नैव यद्यपि । तथापि समवर्णादि-जातिभिर्गणनां गताः ॥ २ ॥

तथोक्तं प्रज्ञापनावृत्तौ-"केवलेमेव विशिष्टवर्णादियुक्ताः संख्यातीताः स्वस्थाने व्यक्तिभेदेन योनयो, जातिमधिकृत्य एकैव योनिर्गण्यन्ते ।

लक्षाश्चतुरशीतिश्च, समान्येन भवन्ति ताः । विशेषात्तु यथास्थानं, वक्ष्यन्ते स्वामिभावतः ॥ ३ ॥

पुनस्त्रिविधा योनिः—संवृता विवृता चैव योनिर्विवृतसंवृता । विस्पष्टमनुपलक्ष्यमाणा संवृता, स्पष्टमुपलक्ष्या जलाशयादिवदिति विवृता ॥४॥ उक्तोभयस्वभावा तु योनिर्विवृतसंवृता, बहिर्दृश्याहृश्यमध्या नारीगर्भाशयादिवत् ॥५॥ तृतीययोनयः स्तोकास्तेभ्योऽसंख्यघ्ना द्वितीययोनयः, तेभ्योऽनन्तगुणिताऽयोनयस्तेभ्योऽनन्तगुणिताः प्रथम योनयः ॥ ३ ॥

अथ पुनस्त्रिविधा योनयः—शीता, उष्णा, शीतोष्णाः पूर्ववद्भाव्याः ३ एवं सचित्ता अचित्ता मिश्राः, तत्र जीवप्रदेशैः परस्परमनुगमेनोररीकृता जीवदेहादिः सचित्ता,तदितरा शुष्ककाष्ठादिवदचित्ता, अतएवांगिभिः सूक्ष्मैर्निखिलपूरिते लोके तत्प्रदेशैरचित्तानां योनीनां सचित्तता न भवति, सचित्ता अचित्ता तु मिश्रा नृतिरश्चां योनिः योनौ यथा शुक्रशोणितपुद्गलाः ये आत्मसात्कृतास्ते सचित्ता अपरे अचित्ता अतो मिश्रा, यथा–स्त्रीणां नाभेरधस्तात् शिराद्वयं पुष्पमालावैकक्षकाकारमस्ति, तस्याऽधस्तादधोमुखसंस्थितकोशाकारा योनिः, तस्याश्च बहिश्चूतकलिकाकृतयो मांसमंजर्यो जायन्ते । ताः किलाऽसृक्स्पन्दित्वात् ऋतौ स्रवन्ति, तत्र केचिदसृजो लवाः कोशाकारकां

योनिमनुप्रविश्य संतिष्ठन्ते, पश्चात् शुक्रसंमिश्रांस्तानाहारयन् जीवस्तत्रोत्पद्यते । तत्र ये योन्या आत्मसात्कृतास्ते सचित्ताः, कदाचिन्मिश्रा इति । न ये तु पुनः स्वरूपतामापादयन्तस्तेऽचित्ताः, अपरे वर्णयन्ति असृक् सचेतनं शुक्रमचेतनं, अन्ये ब्रुवते शुक्रशोणितमचित्तं योनिप्रदेशाः सचित्ता इत्यतो मिश्रा इति ॥ तत्त्वार्थवृत्तौ द्वितीयाध्याये ॥ पुनर्योनिस्त्रिधा–शङ्खावर्त्ता १ कूर्मोन्नता कूर्म्मपृष्टमिवोन्नता २ वंशीपत्रा च–वंशीपत्राकारा । स्त्रीरत्नस्य १ अर्हच्चक्रीवासुदेव-बलदेवाम्बानां २ तृतीया पुनरन्यासां स्त्रीणां योनिः ३ । इदं च योनीनां त्रिधा त्रैविध्यं स्थानाङ्गतृतीयस्थाने आचाराङ्गवृत्तौ शुभाऽशुभभेदेन योनीनामेकत्वमेवं गाथाभिः प्रदर्श्यते

सीयादीजोणीओ, चउरासीती अ सयसहस्सेहिं । असुहाओ य सुहाओ तत्थ सुहाओ इमा जाण ॥१॥
असंखाउ मणुस्सा, राइसर संखमादियाऊणं । तित्थयरनामगोअं सव्वसुहं होइ नायव्वं ॥२॥
तत्थवि य जाइसंपन्नयाइ सेसाओ हुंति असुहाओ। देवेसु किव्विसाई सेसाओ हुंति असुहाओ ॥३॥
पंचिंदियतिरिएसु, हयगयरयणा हवन्ति उ सुहाओ । सेसाओ असुहाओ सुहवन्नेगिंदियादीया ॥ ४ ॥
देविंदचक्कवट्टित्तणाइं मोत्तुं च तित्थयरभावं । अणगारभावियाविय, सेसाओ अणंतसो पत्ता ॥ ५ ॥

[1]इति योनिस्वरूपं लेशतो लिपीकृतमिति ॥

अनालोकानां–अज्ञानानां अन्धकारो यः स तथा तं, अपर्यवसितकालं यावत् अनन्तम्, नित्यं सदा उद्गतत्रासाः–उत्त्रासाः, शून्याः

---

१ विस्तरतो प्रज्ञापना–स्थानाङ्ग–तत्त्वार्थवृत्तौ दर्शितम्

ग वासवसहिं जहिं आउयं निबंधंति पावकम्मकारी

बंधवजणसयणमित्तपरिवज्जिया, अणिट्ठा भवंति, अणादेज्जदुव्विणीया कुठाणासण-कुसेज्ज-कुभोयणा, असुइणो, कुसंघयणकुप्पमाण-कुसंठिया, कुरूवा, बहुकोहमाणमायालोभा, बहुमोहा, धम्मसन्नसम्मत्तपरिब्भट्ठा, दारिद्दोवद्दवाभिभूया, निच्चं परकम्मकारिणो, जीवणत्थरहिया, किविणा, परपिंडतक्कका, दुक्खलद्धाहारा, अरसविरसतुच्छकयकुच्छिपूरा, परस्स पेच्छंता, रिद्धिसक्कारभोयणविसेससमुदयविहिं निंदंता, अप्पकं कयंतं च

कर्त्तव्यतामूढाःभयेन संज्ञाभिःआहार-मैथुन-परिग्रहादिभिः संप्रयुक्तास्ततः कर्मधारय, इह च वसेर्निरुपसर्गस्याऽपि सकर्मकत्वं छांदसत्वात्; वसन्ति-अध्यासते संसारसागरमिति। पुनः कीदृशानां उद्विग्नानां वासं-वसतिस्थानं यः तथा तं यत्र यत्र ग्रामकुलादौ आयुर्निबध्नन्ति सपापाः-पापकारिणो ये ते बान्धवजन-स्वजनविवर्जिता भातृस्वजनपुत्रमित्रपरिवर्जिता भवन्तीति क्रियासंटङ्क। जनस्य अनिष्टा भवन्ति, अनादेयनामगोत्रत्वाच्च दुर्विनीताः प्रतीतं। कुत्सितं शरीरस्य स्थानं वा आसनं येषां ते, कुशय्याः-कुत्सितशयनाः कुभोजनाः-कदशनास्ततो द्वन्द्वः। अशुचयो-जुगुप्सनीया अश्रुतयो वा कुसंहननाः-सेवार्त्तादिसंहननेन युक्ताः, कुप्रमाणा-अतिदीर्घा अतिहस्वा वा, कुसंस्थिताः-हुंडादिसंस्थानाः, कुरूपाः-कुत्सितवर्णाः, बहुक्रोधमानमायालोभा इति प्रतीतं, बहुमोहा-अतिकामा अत्यार्थाऽज्ञाना वा, धर्मसंज्ञायाः-धर्मबुद्धेः सम्यक्त्वाद्वा परिभ्रष्टाः, दारिद्र्योपद्रवाऽभिभूता, नित्यं-सदा परेषां गृहे नीचकर्मकराः-कचवराऽपनयनादिकारिणः, जीवनोपायं यत् अर्थ-द्रव्यं तेन रहिताः, अथवा जातिः प्रतीतं इते-गते प्राप्ते अर्थेच्छया जातिजीवनमपि गते तेन रहिते इत्यर्थः, कृपणाः-रङ्काः, परिपिंडितर्केकाः-परदत्तभोजनगवेपकाः, दुःखेन-कष्टेन लब्धः-प्राप्त आहारो यैस्ते तथा, अरसं-हिङ्ग्वादिभिरसंस्कृतं, विरसं-पुराणं तुच्छं यद-

परिवयंता, इह य पुरेकडाइं कम्माइं पावगाइं विमणासो सोएण डज्झमाणा, परिभूता होंति । सत्तपरिवज्जिया य छोभा–सिप्पकला–समयसत्थपरिवज्जिया, जहाजायपसुभूया, अवियत्ता, णिच्चनीयकम्मोवजीविणो, लोयकुच्छणिज्जा, मोघमणोरहा, निरासबहुला, आसापासपडिबद्धपाणा, अत्थोपायाणकामसोक्खे य लोयसारे होंति।

---

त्पं तादृशैः कृतं कुक्षेः उदरस्य पुरः पूर्तिर्यैस्ते तथा, परसम्बन्धिनं–परसत्कं प्रेष्यन्तः–पश्यन्तः कमित्याह ? ऋद्धिः–सम्पत् सत्कारः पूजा भोजनं–अशनं एतेषां ये विशेषा–विविधाः प्रकाराः तेषां यः समुदयः उदयवर्त्तित्वं तस्य यो विधिर्विधानं–अनुष्ठानं स तथा तं। निन्दन्तो जुगुप्समानाः, आत्मानं पुनः कृतांतं च दैवं-भाग्यं च विलापयन्तः कानि परिदेवितानीत्याह? इहैवमक्षरघटना–इह संसारे वा पुराकृतानि पूर्वजन्मोपार्जितानि–कर्म्माणि, इह जन्मनि पापकानि–अशुभानि, विमनसो–दीनाः शोकेन दह्यमानाः प्राप्ते गते शोकः अप्राप्ते प्रार्थनाऽभिलाषः शोकः, परिभूताः भवन्तीति योगः । सत्त्वपरिवर्जिताः छोभत्ति निस्सहायाः क्षोभणीया वा कुत्राऽपि छलत्ति पाठः, शिल्पं-चित्रादि कला धनुर्वेदादिः समयशास्त्रं-जिनबौद्धादिसिद्धान्तशास्त्रं एभिः परिवर्जिताः। यथाजातपशुभूताः शिक्षाभरणादिवर्जितबलीवर्दादिसदृशाः, निर्विज्ञानत्वादिसाधर्म्यात्, अप्रतीत्युत्पादका अवियत्ता इत्यर्थः, नित्यं नीचानि–अधमजनोचितानि कर्माणि उपजीवन्ति तैर्वृत्तिं कुर्वन्ति ये ते तथा, लोककुत्सनीयाः–लोकगर्हणीयाः चौराः । मोघा–निःफला मनोरथा अभिलाषा येषां ते तथा, मोहमणोरहा पाठेतरमाह अज्ञानमयत्वात् मोहकाराभिलाषा इत्यपि, निराशाः-अप्राप्तत्वात् तदेव निर्गतेष्टफलरूपं येषां ते तदेव बहुलं येषां ते तथा । आशापाशेषु प्रतिबद्धाः इच्छापाश एव बन्धनं येषां ते तथा, तदेव प्राणा येषां ते तथा । अर्थोपादानं–द्रव्योपार्जनं, कामसौख्यं इन्द्रियाज्ञातं ते, द्वे लोकसारे–लोकप्रधाने भवन्ति अर्थकाम एव लोके मान्यं भवति, ते द्वे प्राति अफलवन्तः–अप्राप्तकामसुखा

अफलवंतका य सुट्ठुविय उज्जमंता, तद्दिवसेसुज्जुत्तकम्मकयदुक्खसंठवियसित्थपिंडसंचया पक्खीणदव्वसारा, निच्चं अधुवधणधण्णकोसपरिभोगविवज्जिया, रहियकामभोगपारिभोगसव्वसोक्खा, परसिरिभोगोवभोगनि-

इत्यर्थः, यदुक्तं—

यस्याऽर्थास्तस्य मित्राणि, यस्यार्थास्तस्य बान्धवाः। यस्यार्थाः स पुमान् लोके, यस्यार्थाः स च पण्डितः ॥ १ ॥

राज्ये सारं वसुधा, वसुन्धरायां पुरं पुरे सौधां। सौधे तल्पं तल्पे वराङ्गना[1]ऽनङ्गसर्वस्वमिति ॥ २ ॥

लोकसारता अर्थकामयोरिति। सुष्ठु अपि सम्यग्तया उद्यमवन्तो-यतमानाः उक्तं च—

यद्यदारभते कर्म, नरो दुष्कर्मसञ्चयः। तत्तद्विफलतां याति, यथा बीजं महोषरे ॥ १ ॥

तेपु तेपु दिवसेपु उद्युक्तैः-उद्यमवद्भिः साद्भिः कर्मणा व्यापारेण कृतेन यो दुःखेन-कष्टेन संस्थापितो-मीलितः, सिक्थानां पिण्डस्तस्याऽपि सञ्चये पराः-प्रधाना ये ते तथा, पुनः कीदृशाः? एतावता पर्युषितकदशनसंग्रहपरा आयतिसमये तादृशाऽशनाऽलाभादित्यर्थः, क्षीणद्रव्यसाराः। नित्यं-सदा अध्रुवाणां—अस्थिराणां धनानां-गणिमादिचतुर्द्धानां धान्यानां शाल्यादीनां कोशस्तदाश्रयः-भाण्डागारः तेषां स्थिरत्वेऽपि तत्परिभोगवर्जिताः। तथा रहिता-विरहिताः कयोः कामयोः-शब्दरूपयोः भोगानां च गन्धरसस्पर्शानां परिभोगे-आसेवने यत्सौख्यमानन्दो यैस्ते तथा। परेषां श्रियो लक्ष्म्यस्तासां भोगोपभोगस्तयोर्यत् निश्राणं-निश्रा तस्य मार्गणपरा-गवेपणपराः एतावता मृतकद्रव्येच्छवः, अथवा परसक्तवस्तुप्रापणेच्छवः सकृदेव भुज्यते इति भोगः, अन्नस्रगादिकः पुनः पुनः भुज्यते

[1] वराङ्गनास्वपि धनं

स्साणमग्गणपरायणा, वरागा, अकामिकाए विणेंति । दुक्खं णेव सुहं णेव निव्वुतिं उवलभंति, अच्चंतविपुल-दुक्खसयसंपलित्ता परस्स दव्वेहिं जे अविरया एसो सो अदिण्णादाणस्स फलविवागो इहलोइओ, पारलोइओ, अप्पसुहो, बहुदुक्खो, महब्भओ बहुरयप्पगाढो, दारुणो, कक्कसो, असाओ, वाससहस्सेहिं मुच्चति, न य अवेय-

स उपभोगः—अङ्गनावस्त्रगृहादिकः यतः

[1]सइ भुज्जइत्ति भोगो, सो पुण आहारपुप्फमाइयो, उवभोगो पुणो पुण उवभुज्जइ वत्थनिलयाइ ॥१॥ वराकास्तपस्विनः कदापि अमिलनात्, अकामिकया—अनिच्छया विनयन्ति-प्रेरयन्ति दुःखं अतिवाहयन्तीत्यर्थः । किं तत् दुःखं—असुखमित्याह—नैव सुखं नैव निर्वृत्ति-स्वास्थ्यं उपलभन्ते—प्राप्नुवन्ति, अत्यर्थं—विपुलं—विस्तीर्णं यत्दुःखं—स्वमनोरथाऽसंप्राप्ति परमनोरथापूर्णप्राप्तिरूपं असुखं तेषां शतसहस्रं तेन संप्रदीप्ता-ज्वलिताः तादृशाः सन्तो नैव सुखं लभन्ते परद्रव्यैः कृत्वा । पुनः कीदृशाः ? ये अविरताः अदत्तादानात् एषः विवक्षितः अदत्तादानस्य अत उर्ध्वं सूत्रं पूर्वव्याख्यातमस्ति परं स्थानाशून्यफलविपाकताहेतोः अतो लिख्यते ॥ इह लौकिकः, पारलौकिकश्च, अल्पसुखः, बहुदुःखः, महद्भयकृत्, बहुपापकर्मप्रगाढो—व्याप्तः, दारुणो--भयकरः, कर्कशः--कठिनः, वर्षसहस्रैरपि मुच्यन्ते न तत् पापकर्म अवेदयित्वा हु निश्चितं अस्ति मोक्षो—निर्जरणारूपः कर्मणां वेदयित्वा मोक्षः एवममुना प्रकारेण आख्यातवान्, ज्ञानकुलनन्दनः महात्मा जिनः वीर इति प्रधाननाधेयः महावीरः कथितवान् अदत्तादानस्य महाश्रवस्य फलविपाकं एतकं तृतीयं प्राणातिपात--मृषावादापेक्षया अदत्तादानं हरणं दहनं मरणं भयं कलुषं-मालिन्यं त्रासनं अकस्माद्भयोत्पादकं परसत्कं मे-

[1] सकृद्भुज्यते इति भोगः स पुनराहारपुष्पादिकः । उपभोगस्तु पुन पुनरुपभुज्यते वस्त्रनिलयादि ॥१॥

इत्ता अत्थि उ मोक्खोत्ति, एवमाहंसु णायकुलनंदणो महप्पा जिणो उ वीरवरनामधेज्जो कहेसी य अदिण्णादाणस्स फलविवागं एयं तं ततियंपि अदिन्नादाणं हर–दह–मरण–भय–कलुस–तासण–परसंतिकभेज्जलोभमूलं एवं जाव चिरपरिगतमणुगतं दुरंतं ॥ ततियं अहम्मदारं समत्तं तिबेमि ॥ ३ ॥ ( सू० १२ )

---

घन्ते भेदनीयलोभमूल एवं यावत् चिरपरिचितं अनन्तं दुरन्तमित्यादि पाठो ग्राह्यः, तृतीयं अधर्मद्वारं समाप्तं । ब्रवीमिति–कथ्यामि तीर्थंकरोपदेशेन ज्ञात्वा स्वबुद्ध्येति ज्ञेयं ॥

॥ इति श्रीदशमाङ्गस्य प्रश्नव्याकरणनामरूपस्य तृतीयाश्रवस्य विवरणमेतल्लिखितं समासेन ॥

## इति तृतीयं द्वारं व्याख्यातं तृतीयमध्ययनं ।

# अथ चतुर्थमब्रह्माध्ययनम्

व्याख्यातं तृतीयमध्ययनं साम्प्रतं चतुर्थमारभ्यते—

**जंबू ! अबंभं च चउत्थं सदेवमणुयासुरस्स लोयस्स पत्थणिज्जं, पंकपणयपासजालभूयं, थीपुरिसनपुंसवेद-**

---

अस्य चाऽयमभिसम्बन्धः—अत्र निर्देशानुक्रमेण अदत्तादानं प्रायोऽब्रह्मसक्तचित्ता विदधन्तीति अनेन सम्बन्धेनाऽऽयातस्य चतुर्थाध्ययनस्य अब्रह्माश्रवनामरूपस्याऽस्य यादृशादिपञ्चद्वारप्रतिपन्नस्येदमादिसूत्रम्—

जम्बूरिति शिष्यामन्त्रणं अब्रह्म—अकुशलं कर्म चतुर्थं—प्राणातिपात—मृषा—अदत्तादानापेक्षया चतुर्थं तन्मिथुनमिति नामकं विवक्षितं । सह देवमनुजासुरैर्यो लोकः स तथा तस्य प्रार्थनीयं—अभिलषणीयं यतः—

**हरिहरहिरण्यगर्भप्रमुखे भुवने न कोऽप्यसौ शूरः। कुसुमविशिखस्य विशिखान् अस्खलयत् यो जिनादन्यः ॥१॥**

**[1]नवि किंचि अणुन्नायं, पडिसिद्धं वाऽवि जिणवरिंदेहिं। मोत्तुं मेहुणभावं जं विणा रागदोसेहिं ॥१॥**

पङ्कः कर्दमो महान् पनकः स एव प्रतलः सूक्ष्मः तदेव पाशबन्धहेतुत्वात् जालभूतं जालसदृशं यतः—

---

१ नैव किञ्चिदनुज्ञातं न च प्रतिषिद्धं वाऽपि जिनवरेन्द्रैः। मुक्त्वा मैथुनभाव यद् विना रागद्वेषाभ्यां

चिंध, तवसंजमबंभचेरविग्घं, भेदायतणबहुपमादमूलं, कायरकापुरिससेवियं, सुयणजणवज्जणिज्जं, उड्ढनरयतिरियतिलोकपइट्ठाणं, जरामरणरोगसोगबहुलं, वधबंधविघातदुव्विघायं, दंसणचरित्तमोहस्स हेउभूयं, चिरपरि-

सन्मार्गे तावदास्ते प्रभवति पुरुषस्तावदेवेन्द्रियाणां, लज्जां तावद्विधत्ते विनयमपि समालम्बते तावदेव ।
भ्रूचापाकृष्टमुक्ताः श्रवणपथजुषो नीलपक्ष्माण एते, यावल्लीलावतीनां न हृदि धृतिमुषो दृष्टिबाणाः पतन्ति ॥१॥

तथा स्त्रीपुरुषनपुंसकवेदानां चिन्हं-लक्षणं स्त्रियं प्रत्यभिलाषः पुंवेदः पुमांसं प्रत्यभिलाषः स्त्रीवेदः उभयं प्रत्यभिलाषः नपुंसकवेदः, पुनः कीदृशं ? तपो-अन्नादित्यागः संयमो-अहिंसा ब्रह्मचर्यं तेषां विघ्नभूतं, पुनः कीदृशं ? भेदस्य चारित्रजीवितनाशस्य आयतनानि-आश्रया ये बहवः प्रमादा-मद्यविकथादयस्तेषां मूलं तल्लक्षणं । आह-

किं[१] किं ण कुणइ किं किं न भासए चिंतए वि य न किं किं ?। पुरिसो विसयासत्तो विहलंघलिउव्व मज्जेण ॥१॥

इति वचनप्रामाण्यादिति

कातराः-परीषहभीरवः अत एव कापुरुषाः कुत्सितनरास्तैः सेवितं यद्यपि धी : सेवितं तत्तु त्यागदृष्टया तदेवाऽऽह-

सुजनानां-पापविरतानां यो जनस्तस्य वर्जनीयं-परिहरणीयं, ऊर्ध्वलोकस्सुरलोकः नरकलोकोऽधोलोकः तिर्यग्लोकस्तल्लक्षणं यत् त्रैलोक्यं तत्र प्रतिष्ठानं अवस्थितिः मैथुनस्येति ज्ञेयं, जरा-वयोहानिः मरणं-प्राणव्यपरोपणं प्रेत्यभवप्राप्तिर्जन्म रोगाः-ज्वरादयः शोकस्ते बहुला यस्मिन् तत्-

१ किं किं न करोति, किं किं न भाषते चिन्तयत्यपि च न किं किम् ?। पुरुषो विषयासक्तो मत्त इव मद्येन ॥१॥

कम्पः स्वेदः श्रमो मूर्च्छा भ्रमिर्ग्लानिर्बलक्षयः, राजयक्ष्मादिरोगाश्च भवेयुर्मैथुनोत्थिताः ॥१॥

तथा–[1]जो सेवइ किं लहई थामं हारेइ दुब्बलो होइ, पावेइ वेमणस्सं दुक्खाणि अ अत्तदोसेणं ॥१॥ इति वचनात् पुनः कीदृशं ? वधस्ताडनं संयमनं विघातो–मारणं एभिः दुष्करो विघातो यस्य तत् गाढरागाणामपि कामतीव्रेच्छा नोपशाम्यति यतः–

[2]कृशः खञ्जः काणः श्रवणरहितः पुच्छविकलो, व्रणैः पूयक्लिन्नैः कृमिकुलशतैरावृततनुः
क्षुधाक्षामो जीर्णः पिठरककपालार्पितगलः शुनीमन्वेति श्वा हतमपि च हन्त्येव मदनः ॥१॥इति

पुनः कीदृशं ? दर्शनचारित्रमोहस्य हेतुभूतं–तद्बन्धननिमित्तं, ननु चारित्रमोहस्य हेतुस्तत्प्रतीतं यदागमः—

[3]तिव्वकसाओ बहुमोहपरिणओ रागदोससंजुत्तो । बंधइ चरित्तमोहं दुविहंपि चरित्तगुणघाई ॥१॥

द्वैविध्यं कषायनोकषायभेदात् परं यत् दर्शनमोहस्य हेतुरुक्तं तत् कथं संजाघटीति ? सत्यं तथाहि–तद्धेतुकां गाथामाह–

[4]अरिहंतसिद्धचेईअतवसुअगुरुसाहुसंघपडणीओ। बन्धति दंसणमोहं अणंतसंसारिओ जेणं ॥१॥

भवतीति शेषः, स्वरूपपक्षाऽब्रह्मसेवनेन या संघप्रत्यनीकता तया दर्शनमोहं बध्नतो अब्रह्मचर्यं दर्शनमोहनीयहेतुतां न व्यभिच-

१ यः सेवते किं लभते स्थाम हारयति दुर्बलो भवति। प्राप्नोति वैमनस्यं दुःखानि चात्मदोषेण ॥१॥

२ अस्मिन् पद्ये द्वितीय–तृतीयपादौ प्रत्यन्तरे विपर्यस्तौ दृश्येते

३ तीव्रकषायो बहुमोहपरिणतो रागद्वेषसंयुक्तः। बध्नाति चारित्रगुणघातिनं द्विविधमपि चारित्रमोहं ॥१॥

४ अर्हत्सिद्धचैत्यतपस्विश्रुतगुरुसाधुसङ्घप्रत्यनीकः। बध्नाति दर्शनमोहमनन्तसंसारिको येन ॥१॥

गयमणुगयं दुरंतं चउत्थं अधम्मदारं (सूत्रं १३)

तस्स य णामाणि गोन्नाणि इमाणि होंति तीसं, तं जहा–अबंभं १ मेहुणं २ चरंतं ३ संसग्गि ४ सेवणाधि-

---

रति, कथितं च स्वपक्षाऽब्रह्मासेवकस्य मिथ्यात्वबन्धोऽन्यथा तस्यागमे दुर्लभबोधितोक्ता यथा

[1]संजइचउत्थभंगे चेइयदव्वे य पवयणुड्डाहे। रिसिघाए य चउत्थे मूलग्गी बोहिलाभस्स ॥१॥ इति।

तथा चिरपरिचितमनादिकालसेवितं वा पाठः अनुगतं–अनवच्छिन्नं, दुरन्तं–दुष्टफलं, चतुर्थमधर्मद्वारमाश्रवद्वारमिति तस्याऽब्रह्मस्य स्वरूपमुक्तं अथ तदेकार्थिकद्वारमाह—

तस्य अब्रह्मस्य नामानि गोण्णाणि–गुणनिष्पन्नानि त्रिंशद् भवन्ति तद्यथा अब्रह्म–अकुशलानुष्ठानं।१। मैथुनं युग्मस्य कर्म मिथुनं द्रव्यतो द्वयोः संयोगेन भावतो आत्मपरभावाभ्यां।२। 'चरन्तं' विश्वतो व्यापि।३। संसर्गिः संपर्कः स्त्रीपुंससंगविशेषात् यतः–

नामाऽपि स्त्रीति संह्लादि विकरोत्येव मानसं। किं पुनर्दर्शनं तस्या विलासोल्लासितभ्रुवः? ॥१॥४।

सेवनानां चौर्यादिप्रतिसेवनानामधिकारो नियोगः, अब्रह्मकृत् प्रायश्चौर्यादिप्रतिसेवापरो भवति आह च—

सर्वेऽनर्था विधीयन्ते, नरैरर्थैकलालसैः। अर्थस्तु प्रार्थ्यते प्रायः, प्रेयसीप्रेमकामिभिः ॥१॥५।

तथा संकल्पो–विकल्पस्तत् प्रभवत्वात् यतः–

काम! जानामि ते रूपं, संकल्पात् किल जायसे। न त्वां संकल्पयिष्यामि, ततो मे न भविष्यसि ॥१॥ इति ६।

---

१ संयतीचतुर्थभङ्गे चैत्यद्रव्यभक्षणादौ च प्रवचनोड्डाहे। ऋषिघाते च चतुर्थे मूलेऽग्निर्बोधिलाभस्य ॥१॥

कारो ५ संकप्पो ६ बाहणा पदाणं ७ दप्पो ८ मोहो ९ मणसंखोभो[1] १० अणिग्गहो ११ वुग्गहो १२ विघाओ १३

बाधना बाधाहेतुत्वात् केषां ? पदानां संयमस्थानानां प्रजानां वा—लोकानां यतः—

यश्चेह लोकेऽप्यपरे नराणामुत्पद्यते दुःखमसह्यवेगम् ।
विकाशनीलोत्पलचारुनेत्रा, मुक्त्वा स्त्रियस्तत्र न हेतुरन्यः ॥१॥इति ७।

देहदृप्तत्वात् दर्पः अथवा तज्जन्योन्मादसेवनात् दर्पः सौभाग्याद्यभिमानवत्त्वात् दर्पः दीप्तरससेवनात् दर्पः, यथा—

[2]रसा पगामं न निसेवियव्वा पायं रसा दित्तिकरा हवंति
दित्तं च कामा समभिद्दवन्ति दुमं जहा साउफलं तु पक्खी ॥१॥

नहि प्रशमाद् दैन्याद्वा पुरुषस्याऽत्र प्रवृत्तिः संभवति दर्पत एव भवति, यदुक्तं—

प्रशान्तवाहिचित्तस्य, सम्भवन्त्यखिलाः क्रियाः । मैथुनव्यतिरेकिण्यो, यदि रागं न मैथुनम् ॥१॥इति ८।

मोहो मोहनं वेदरूपमोहोदयं वेद्यमानरूपत्वात् अज्ञानरूपत्वाद्वा मोह उच्यते—

दृश्यं वस्तु परं न पश्यति जगत्यन्धः पुरोऽवस्थितं। रागान्धस्तु यदस्ति तत्परिहरन् यन्नास्ति तत्पश्यति ॥
कुन्देन्दुदगवर्णचन्द्रकलशश्रीमल्लतापल्लवानारोप्याशुचिराशिषु प्रियतमागात्रेषु यन्मोदते ॥१॥९।

१ ०संखेवो क संक्षिके
२ रसाः प्रकामं न निषेवितव्याः प्रायो रसा दृप्तिकरा भवन्ति। दृप्तं च कामाः समभिद्रवन्ति द्रुमं यथा स्वादु फलं तु पक्षिणः ॥१॥

विभंगो १४ विब्भमो १५ अधम्मो १६ असीलया १७ गामधम्मतित्ती १८ रती १९ रागचिंता २०कामभोगमारो



मनःसंक्षोभश्चित्तचलनाद्विनेदं न जायते चरणधर्मस्येति गम्यं यदुक्तं—

[1]निक्कडकडनिक्खेवप्पहारनिब्भिन्नजोगसंनाहा। महारिसिजोहा जुवईण [2]जंति सेवं विगयमोहा १॥१०

अनिग्रहो—अनिषेधो मनसो विषयेषु प्रवर्त्तनात् तस्येति शेषः ११। विग्रहः—कलहस्तद्धेतुत्वात् उक्तं च—

ये रामरावणादीनां सङ्ग्रामा ग्रस्तमानवाः। श्रूयन्ते स्त्रीनिमित्तेन तेषु कामो निबन्धनम् ॥१॥

अथवा व्युद्ग्रहो—विपरीतोऽभिनिवेशस्तत् प्रभवत्वात् व्युद्ग्रहं उच्यते, पुनः उक्तं कामिनामिदं स्वरूपं—

दुःखात्मकेषु विषयेषु सुखाभिमानः, सौख्यात्मकेषु नियमादिषु दुःखबुद्धिः।
उत्कीर्णवर्णपदपङ्क्तिरिवाऽन्यरूपा। सारूप्यमेति विपरीतगतिप्रयोगात् ॥१॥ १२।

'विघाओ' विघातो नाशो गुणानां संयमस्येति शेषः

जइ ठाणी० १ तो पढिअं० २ इति गाथाद्वयं व्याख्येयं १३, विभङ्गो—विराधना एव गुणानां संयमस्येत्यध्याहार्यं १४, विभ्रमो—भ्रान्तिमत्त्वं अनुपादेयेष्वपि कामभोगेषु परमार्थबुद्ध्या सारत्वेनादरणीयत्वात् तथा विभ्रमाणां—कामविकाराणां आश्रयत्वात् विभ्रमः

१ निकृष्टकटाक्षनिक्षेपप्रहारनिर्भिन्नयोगसन्नाहाः। महर्षयो योद्धारो युवतीनां सेवां यान्ति विगतमोहाः ॥१॥ २ जं न सेवंति 'क' प्रतौ
२ जइ ठाणी जइ मोणी जइ मुंडी वक्कली तवस्सी वा। पत्थंतो अ अबंभं बंभावि न रोयए मज्झं ॥१॥
तो पढियं तो गुणियं तो मुणियं तो य चेइओ अप्पा। आवडियपेल्लियामंतिओऽवि जइ न कुणइ अकज्जं ॥२॥

२१ वेरं २२ रहस्सं २३ गुज्झं २४ बहुमाणो २५ बंभचेरविग्घो २६ वावत्ति २७ विराहणा २८ पसंगो २९ कामगुणो ३० त्ति विय तस्स एयाणि एवमादीणि नामधेज्जाणि होंति तीसं (सूत्रं १४)

तं च पुण निसेवंति सुरगणा सअच्छरा मोहमोहियमती, असुर-भुयग-गरुल-विज्जु-जलण-दीव-उदहि-

१५, अधर्मः अचारित्रधर्मत्वाद् १६, अशीलता चारित्रवर्जितत्वात् आशयेऽप्यब्रह्मचरणवारणं वारकरहितत्वं १७, ग्रामधर्म्माः-शब्दादयः कामगुणास्तेषां गवेषणं लम्भं च ग्रामधर्मतृप्तिः[तप्तिः] अब्रह्मसेवनत्वाद् अब्रह्मेत्युच्यते १८, रतिः-रंङ्गधर्ममिथुनमित्यर्थः[1] १९, रागो-रागानुभूतिः रागचिन्तनं शृङ्गारादीनां कल्पना २०, कामभोगौ प्रतीतौ ताभ्यां सह मारो-मदनः मरणं वा कामभोगमारः २१, वैरहेतुत्वाद्वैरं २२, एकान्ताचरणत्वात् रहस्यं २३,गोपनीयत्वाद् गुह्यं २४,बहूनां माननीयत्वात् बहुमानः २५, ब्रह्मचर्य-मैथुनविरमणं तस्य विघ्नो व्याघातः २६, व्यापत्तिः भ्रंशो गुणानामिति गम्यं २७, विराधना चारित्रधर्मस्य २८, प्रसंगः कामेषु प्रसजनमभिष्वंगः २९, कामगुणो मदनकरणकार्यं ३०, तस्य अब्रह्मचर्यस्य एतानि नामानि एवमादिकानि पूर्वोक्तानि नामधेयानि-नामानि भवन्ति-वर्त्तन्ते त्रिंशत्संख्याकानि, इदं काक्वा व्याख्येयं, केवलं नैतानि किन्त्वन्यान्यपि भवन्ति ।

तच्च अब्रह्म पुनः के के निषेवन्ते तानाऽऽह-सुरगणाः-वैमानिकदेवसमुदायाः अप्सरोभिः सहिताः सदेवीका इत्यर्थः, देव्योऽपि सेवन्ते इत्यर्थः । कीदृशास्ते मोहेन मोहिता-विपर्यासिता मतिर्येषां ते।तथा असुराः-असुरकुमाराः, भुजगाः-नागकुमाराः,गरुडध्वजाः-गरुडाः सुपर्णकुमाराः, विद्युत्कुमाराः, ज्वलनाः अग्निकुमाराः, द्वीपकुमाराः, उदधिकुमाराः, दिशिकुमाराः, पवनाः-वायुकुमाराः, स्तनित-

१ रतधर्मं मिथुनमित्यर्थ

दिसि-पवण-थणिया, अणवंनि-पणवंनिय-इसिवादिय-भूयवादिय-कंदिय-महाकंदिय-कूहंड-पयंगदेवा, पिसाय-भूय-जक्ख-रक्खस-किंनर-किंपुरिस-महोरग-गंधव्वा, तिरियजोइसविमाणवासि-मणुयगणा, जलयरथलयरखहयरा य, मोहपडिबद्धचित्ता, अवितण्हा, कामभोगतिसिया, तण्हाए बलवईए महइए समभिभूया

कुमाराः एते दश भुवनपतिभेदाः कुमारवत् क्रीडनशीलत्वात् कुमाराः स्वनामसदृशचेष्टाविशेषत्वात् भिन्नदण्डका ज्ञेयाः एषां द्वन्द्व-समासः। अणपन्निकाः १ पणपन्निकाः २ ऋषिवादिकाः ३ भूतवादिकाः ४ क्रन्दिताः ५ महाक्रन्दिताः ६ कूष्माण्डाः ७ पतङ्गाः ८ एतेऽष्टौ व्यन्तरनिकाया व्यन्तरजातिविशेषाः। उपरिवर्त्तिनः वनादीनामन्तरस्थानवर्त्तिनः प्रायो वानमंतर इति भाषा एषामपि द्वन्द्वः ते च ते देवाश्चेति कर्मधारयः। तथा पिशाचादयोऽष्टौ-व्यन्तरभेदाः अधस्तात् पूर्वोक्तानामिति, पिशाचाः १ भूताः २ यक्षाः ३ राक्षसाः ४ किन्नराः ५ किंपुरुषाः ६ महोरगाः ७ गन्धर्वाः ८। तिर्यग्लोके यानि ज्योतिष्कविमानानि तेषु निवसन्ति ये ते ज्योतिष्कविमानवासिनः असंख्येयाः ज्योतिष्का इत्यर्थः, मनुजा मानवा एषां पदानां द्वन्द्वः तेषां ये गणास्समूहाः। जलचराः मत्स्यादयः, स्थलचराः चतुष्पदादयः, खेचराः-विहंगमादयः, मोहेन अज्ञानेन रागद्वेषविपर्यासहृदयेन तेषु वा प्रतिबद्धं निविष्टं चित्तं येषां ते, तथा अवितृप्ताः प्राप्तेष्वपि कामेष्वविगततृष्णा इत्यर्थः, कामभोगे तृपिता-स्तृष्णालवः अप्राप्तकामभोगेच्छवः एतदेव प्रपंचयन्नाह-तृष्णया-भोगाभिलापेण बलवत्या तीव्रया महत्या महाविपयतया समभिभूताः पराभूताः, ग्रथिताः विषयैस्सह सम्बद्धाः, अतिमूर्च्छिताः विषयदोषदर्शनं प्रति मूढतां प्राप्ताः

"न मांसभक्षणे दोषो, न मद्ये न च मैथुने। सेविताः शान्तिमायान्ति, असेव्या गृद्धिवर्द्धिनः ॥१॥

गढिया य अतिमुच्छिया य, अबंभे उस्सण्णा तामसेण भावेण अणुम्मुक्का, दंसणचरित्तमोहस्स पंजरं पिव करेंति अन्नोऽन्नं सेवमाणा,

भुज्जो असुर-सुर-तिरिय-मणुअ-भोगरतिविहारसंपउत्ता य चक्कवट्टी सुरनरवतिसक्कया, सुरवरुव्व देवलोए

---

इत्यादि भाषामुपजीव्य तेष्वेव प्रवर्तन्त इत्यतिमूर्च्छिताः, तद्धेतोः अब्रह्मणि अवसन्नाः शिथिलाः पङ्क इव निमग्नाः, तामसेन भावेन अनुन्मुक्तास्तद्भावेनैव प्रवर्त्तमानाः ज्ञानभावेन रहिता इत्यर्थः, तादृशाः नराः दर्शनचारित्रमोहस्य-द्विरूपसकलमोहनीयकर्मणः पञ्जरं शकुनेर्बन्धनस्थानं, आत्मानं बन्धनस्थानं कुर्वन्ति-विदधति सुरादयः पूर्वोक्ता इति । अन्योन्यं परस्परं अब्रह्मसेवमानाः सन्तो भूयः पुनःपुनः असुरसुरतिर्यग्मनुष्येभ्यो ये भोगाः शब्दादयस्तेषु या रतिः-रागस्तत्प्रधाना ये विहाराः-क्रीडाविविधप्रकाराश्चेष्टास्तैः संप्रयुक्ताः संयुता ये, ते के इत्याह-चक्रवर्त्तिनो राजातिशायिनः-ससागरां महीं मंडलिकत्वेन भुक्त्वा भरतवर्षं चक्रवर्त्तित्वेऽपि धीराः भोत्तूण भारहवासं अतुलं शब्दादींश्चाऽनुभूय कामभोगेष्ववितृप्ता सन्तो मरणमुपनयन्ति इति संटङ्कः, के ते ? किंविधाः ? इत्याह-सुरेशैर्नरेशैः सत्कृताः पूजिताः के इव अनुभूयमाना इत्याह-सुरवरा इव देवप्रवरा इव यथा देवप्रवरा देवलोके सुखमनुभवन्ति तद्वत्तेऽपीति, भरतक्षेत्रसम्बन्धिनां नगानां-पर्वतानां, नगराणां-कररहितस्थानानां; निगमानां वणिग्जनप्रधानस्थानानां, जनपदानां-देशानां, पुरवराणां-राजधानीरूपाणां, द्रोणमुखानां-जलस्थलपथयुक्तानां, खेटानां-धूलीप्राकाराणां, कर्वटानां-कुनगराणां, मडम्बानां-दुरस्थितसन्निवेशान्तराणां, संवाहानां धान्यादिरक्षार्थं संवहनोचितदुर्गविशेषाणां, पत्तनानां जलपथस्थलपथयोरेकतरयुक्तानां, सहस्रैः मंडिता या सा तादृशी तां, अत्र चक्रवर्त्तिऋद्धिविस्तरस्तु ग्रन्थान्तरादवसेयः परं किञ्चिद् अत्र

भरह-णग-णगर-णियम-जणवय-पुरवर-दोणमुह-खेड-कब्बड-मडंब-संबाह-पट्टणसहस्समंडियं थिमियमे-



लिख्यते चक्रिऋद्धिस्वरूपं-

यक्षाणां षोडशसहस्री सेवावर्ती, तत्र चतुर्दशसु रत्नेषु एकैकः सहस्रः, चक्रिणः स्कन्धयोर्द्वौ, तथा द्वात्रिंशत् सहस्राश्च मुकुटबद्धराजानः सेवाकर्त्तारः, चतुःषष्ठिसाहस्र्यः अन्तःपुरपुरन्ध्र्यः एकलक्षाऽष्टाविंशतिसहस्राश्च वाराङ्गनास्तस्यैव भोग्याः, द्वात्रिंशत्सहस्राणि देशानां, द्वासप्ततिसहस्राणि महापुराणि, अष्टाचत्वारिंशत्सहस्राणि पत्तनानि, नवनवतिसहस्राणि द्रोणमुखानि, षट्त्रिंशत्सहस्राणि वेलाकूलानि, चतुर्दशसहस्राः जलपथाः, एकविंशतिसहस्राः संनिवेशाः, द्वात्रिंशत्सहस्र्यः महानगर्यः, षोडशसहस्र्यः राजधान्यः, षोडशसहस्राणि खेटानि, चतुर्विंशतिसहस्राणि मडम्बानि, तावन्ति एव कर्बटानि, चतुर्दशसहस्राणि संबाधनानि, षोडशसहस्राः रत्नाकराः, नवनवतिसहस्राः सुवर्णाद्याकराः, विंशतिसहस्राः सामान्याकराः, षोडशसहस्राणि द्वीपाः, षट्पञ्चाशदन्तरद्वीपाः, षण्णवतिकोटयो ग्रामाः, एकोनपञ्चाशत्सहस्राण्युद्यानानां, एकोनपञ्चाशत् कुराज्यानि, षोडशसहस्राणि म्लेच्छराज्यानि, चतुरशीतिलक्षाणि प्रत्येकं गजाश्वरथानां, ९ण्णवतिकोट्यः पत्तयः, सर्वसैन्ये त्वष्टादशकोटयोऽश्वाः, मन्त्रीश्वराणां चतुर्दशसहस्री, पण्डितानामशीतिसहस्री, तलारक्षाः सूत्रधाराश्च प्रत्येकयोः चतुरशीतिसहस्री, नियोगिनां कोटित्रयं, कौटम्बिकानां कोटिसप्तकं, त्रिणि शतानि षष्ठिश्च सूपकाराश्चक्रिभोज्यार्थं, अन्ये षट्त्रिंशत्कोट्यः सूपकाराः, षट्त्रिंशत्कोटयश्चाभरणधारकाः, चतुःषष्टिसहस्राः कल्याणमहाकल्याणकारकाः, षट्त्रिंशत्कोटयोऽङ्गमर्दाः, त्रिलक्षाः शस्त्रधराः, पञ्चलक्षा दीपिकाधराः, तिस्रः कोटय आतोद्यानि, चतुरशीतिलक्षाणि निःस्वानानि, दशकोटयः पताकाः,

यणियं एगच्छत्तं ससागरं भुंजिऊण वसुहं, नरसीहा, नरवई, नरिंदा, नरवसभा, मरुयवसभकप्पा, अब्भहियं रायतेयलच्छीए दिप्पमाणा, सोमा, रायवंसतिलगा रवि-ससि-संख-वरचक्क-सोत्थिय-पडाग-जव-मच्छ-कुम्म-रहवर-भग-भवण-विमाण-तुरय-तोरण-गोपुर-मणिरयण-नंदियावत्त-मुसल-णंगल-सुरइयवरकप्परुक्ख-

द्वात्रिंशत् सहस्राणि द्वात्रिंशद्बद्धनाटकानि, त्रिलक्षाणि भोजनस्थानकानि, द्वात्रिंशत्कोटयः कुलानि, एककोटिगोकुलानि, कोटिहलानि, अष्टादश श्रेणयः, प्रश्रेणयश्चाष्टादश, श्रेष्ठि-सार्थवाह-माडम्बिक-महत्तर-अङ्गरक्षक-स्थगिकादित्त-सौविदल्ल-महामल्ल-मल्ल-प्रतीहार-महामात्राश्वारोह-सारथि-कथक-नर्तक-दूतादयोऽनेककोटिसंख्याः, गङ्गासिन्धुदेव्यौ, खण्डप्रपात-तमिस्राद्विगुहादेव्यौ, मागध-वरदाम-प्रभासतीर्थत्रयसुराः, हिमवद्गिरिऋषभकुटाधिष्ठायकौ सुरौ ॥ इत्यादि चक्रिऋद्धिस्वरूपं ज्ञेयम् ॥

तादृशीं स्तिमितां-निश्चलां निर्भयत्वेन स्थिरजनाश्रितां-भृतामित्यर्थः, मेदिनीं-यां पृथवीं एकमेव छत्रं यत्र सा तां एकराजत्वमिव, ससमुद्रान्तां यावत् चतुर्दिशं तां भुक्त्वा पालयित्वा परेभ्यः, वसुधां पृथ्वीं, अत्र हिमवन्तं सागरंतं धीरो भोत्तूण भारहवासमिति, अत एव नरेषु सिंहाः-शूरत्वात्, नरपतयस्तत् स्वामित्वात्, नरेन्द्रास्तेषां मध्ये ईश्वरत्वात्, अङ्गीकृतकार्यभारनिर्वाहकत्वात् नरवृषभाः, मरुद्वृषभकल्पाः, मरुतो देवता-नाग-भूत-यक्षाः वृन्दारकास्तेषु वृषभकल्पाः, तथा स्वदेशोत्पन्नगवादिरत्नभोग्यत्वाद्वृषभकल्पाः, अभ्यधिकं-अधिकं राजतेजोलक्ष्म्या दीप्यमानाः, सौम्या अदारुणा नीरुजा वा, राजवंशतिलकास्तन्मण्डनभूताः। रविः-सूर्यः, शशी-चन्द्रः शङ्खस्त्रिरेखः, वरं-प्रधानं यच्चक्रं, स्वस्तिकः, पताकाः-ध्वजाः, यवाः-मध्यपृथुला उभयतस्तीक्ष्णाः,

१ साथीओ भाषा

मिगवति-भद्दासण-सुरुचि[1]-थूभ[2]-वरमउड-सरिय-कुंडल-कुंजर-वरवसभ-दीव-मंदर-गरुल-ज्झय-इंदकेउ-दप्पण-अट्ठावय-चाव-बाण-नक्खत्त-मेह-मेहल-वीणा-जुग छत्त-दाम-दामिणि-कमंडलु-कमल-घंटा-वरपोत-सूइ-सागर-कुमुदागर-मगर-हार-गागर-नेउर-णग-णगर-वइर-किन्नर-मयूर-वररायहंस-सारस-चकोर

मत्स्याः-मीनाः, कूर्माः कच्छपाः, रथवरः-प्रधानस्यन्दनः, भगो-योनिः, भवनं-गृहं, विमानं-देवगृहं वैमानिकानां, तुरगः-अश्वः, तोरणं गोपुरं च प्रसिद्धानि, मणिश्चन्द्रकान्तादि रत्नानि-कर्केतनादीनि, नन्द्यावर्त्तो-नवकोणकस्वस्तिकः, मुशलं-कणखण्डनं, लाङ्गलं देवहलं वा, सुष्ठु रचितः कृतो वरः प्रधानो यः कल्पद्रुमः, मृगपतिः-सिंहः, भद्रासनं-सिंहासनं, सुरुचिः-आभरणविशेषः, स्तूपः, वरः-प्रधानो मुकुटः, मुक्तावली, कुण्डलं-कर्णाभरणं, कुञ्जरो-हस्ती, वरवृषभः-प्रधानगौः, द्वीपो-जलान्तस्तटं, मन्दरो-मेरुः, गरुडः-सुपर्णः, ध्वजो-लघुपताका, इन्द्रमहोत्सवयष्टिः, दर्पणः-आदर्शः, अष्टापदं-द्युतफलकं, कैलाशः पर्वतविशेषो वा, चापं-धनुः, बाणः शरः, नक्षत्रं-तारकः, मेघो-घनः, मेखला-कांची, वीणा-तंत्री, युगं-खट्वाङ्गं, छत्रं-आतपवारणं, माला-स्रक्, दामिनी-आशरीरावलम्बिनी माला, कमण्डलुः-कुण्डिका, कमलं-पद्मं, [3]घंटा प्रधानपोतः-प्रवहणं, सागरः-समुद्रः, शूची-सीवनोपकरणं तदाकारं भूपणं वा, [सागरः समुद्रः] कुमुदवनं कुमुदाकरः, मकराः-मत्स्याः, हारः प्रतीतः, गागरत्ति स्त्रीणामाभरणविशेषः गगरीकलशोवा, नूपुरं-पादाभरणं, नगः पर्वतः, नगरं-भूरिनरावासः, वज्रं, किंन्नरो-वाद्यविशेषो देवविशेषो वा, मयूरो-बर्हिः, प्रधानराजहंसः, सारसः-क्रौञ्चः, चकोरः पक्षी, [4]चक्रवाकौ द्वन्द्वचरः एतेषां यत्मिथुनं-युग्मं, चामरं-वालव्यजनं, [5]खेटकं-फलकं,पव्वीसको-वाद्यविशेषः,

१ सुरुचि २ थुभ इति भाषा ३ घंट इति भाषा ४ चक्वा भाषा ५ खेडुं भाषा

—चक्कवाग—मिहुण—चामर—खेडग—पव्वीसग—विपंचि—वरतालियंट—सिरियाभिसेय—मेइणि—खग्गंकुस—विमलकलस—भिंगार—वद्धमाणगपसत्थउत्तमविभत्तवरपुरिसलक्खणधरा, बत्तीसं वररायसहस्साणुजायमग्गा, चउसट्ठिसहस्सपवरजुवतीण णयणकंता, रत्ताभा, पउमपम्हकोरंटगदामचंपकसुतयवरकणकनिहसवन्ना, सुवण्णा, सुजायसव्वंगसुंदरंगा, महग्घवरपट्टणुग्गय—विचित्तरागएणिमेणिणिम्मिय—दुगुल्लवरचीणपट्टकोसेज्ज—सोणीसुत्तकवि-

विपञ्ची—सप्ततन्त्री वीणा, प्रधानं तालवृन्तं[1], लक्ष्म्याः अभिषेकः, मेदिनी—पृथ्वी, खड्गः—असिः, अङ्कुशो—हस्तिशिक्षणशस्त्रं, निर्मलः—उज्वलः कलशः, भृङ्गारस्तदेव प्रतिष्ठानयुक्तः, वर्द्धमानकं—पुरुषारूढः पुरुषो वा शरावसंपुटं, प्रशस्तानि—उत्तमानि माङ्गल्यानि विभक्तानि वराणि—प्रधानानि पुरुषाणां लक्षणानि तानि धारयन्ति ये ते । द्वात्रिंशता राजवराणां सहस्रैः अनुयातो—अनुगतो मार्गो येषां ते तथा। चतुःषष्टिप्रधानयुवतीनां नयनकान्ता—लोचनाऽभिरामाः परिणयनभर्त्तारो वा, रक्ता—लोहिता आभा—कान्तिर्येषां ते। पद्मगर्भः कोरण्टकदाम—कोरण्टकाऽभिधानपुष्पस्रक्, चम्पकः—पुष्पविशेषो, सुतप्तवरकनकस्य यो निकषो—रेखा स तथा तत एतेषामिव वर्णो येषां ते, तथा सुष्ठु—शोभनो वर्णो येषां ते तथा, सुष्ठु निष्पन्नानि सर्वाङ्गेन—सर्वप्रकारेण सुन्दराणि—शोभनानि अङ्गानि—अवयवा येषां ते । तथा महार्घाणि—महामूल्यानि प्रधानक्षेत्रोत्पन्नानि—पत्तननिष्पन्नानि, विविधरागाणि, एणी—हरिणी प्रेणी च तत्प्रधाना जातिविशेषा मृगी तच्चर्मवत् मृदूनि यानि दुकूलानि वल्कलवस्त्राणि वा तच्चर्मजातानि, तथा दुकुलो—वृक्षविशेषः तस्य वल्कलं—त्वचं लात्वा उदूखले, जलेन सह कुट्टयित्वा—चूर्णीकृत्य सूत्रीकृत्य वूयन्ते तानि दुकूलानीत्युच्यन्ते, वरचीनान्यपि तान्येव वल्कलवृक्षस्यैव यानि अभ्यन्तरत्व-

१ वींजणो भाषा २ हीर इति भाषा

भूसियंगा, वरसुरभि-गंधवरचुण्णवासवरकुसुमभरियसिरया, कप्पियछेयायरियसुकयरइतमालकडगंगयतुडियपवरभूसणपिणद्धदेहा एकावलिकंठसुरइयवच्छा पालंबपलंबमाणसुकयपडउत्तरिज्जमुद्दियापिंगलंगुलिया, उज्जलनेवत्थरइयचेल्लगविरायमाणा, तेएण दिवाकरोव्व दित्ता सारयनवत्थणियमहुरगंभीरनिद्धघोसा, उप्पन्नसमत्त-

क्र्निर्मितानि-निष्पाद्यमानानि सूक्ष्मतरकोमलानि भवन्ति, तथा चीनदेशोत्पन्नानि चीनानीत्युच्यते, षट्टसूत्रमयानि पट्टानि कुत्राऽपि वाचनान्तरे निर्मितस्थाने क्षौमिक इति पाठस्तत्र क्षौमिकानि-कार्प्पासिकानि वृक्षेभ्यो निर्गतानि इति अन्ये, अतसीमयानीत्यपरे इति वृहद्वृत्तिकारः कौशेयाकारोद्भवानि कौशेयकानि यानि वस्त्राणि तथा श्रोणिसूत्रकं[1]-कटिसूत्रकं तेन भूषितं-शोभितं अङ्गं येषां ते तथा। प्रधानमनोज्ञपुटपाकलक्षणाः सुरभयो गन्धास्तादृशः चूर्णवासश्चन्दनादीनां पिष्टं वरकुसुमानि मालत्यादिप्रतीतानि तैर्भरितानि-भृतानि वा शिरांसि-मस्तकानि येषां ते तथा। कल्पितानि-रचितानि छेकै-र्दक्षैः कृतानि आर्यजनपरिधानयोग्यानि, शिल्पिना सुष्ठु कृतानि रतिदानि-सुखकारीणि तादृशानि माला-आभरणविशेषः, कटकानि वलयानि कङ्कणानि. कुण्डलानीत्यपि पाठः, अङ्गदानि-भुजाभरणानि, त्रुटिता बाहुरक्षिका प्रवरभूषणानि च मुकुटादीन्येव भूषणानि तैः पिनद्धं-व्याप्तं देहं येषां ते तथा। एकावलीस्त्वेकसरिको हारः, कण्ठे-गले सुष्ठु रचितः-परिहितः वक्षसि-हृदये येषां ते तथा। प्रालम्बं झुमणकं तद्वत् प्रलम्बमानो-लम्बायमानः सुकृतः-सुरचितः पटः-परिधानार्हशाटिकाविशेषः उत्तरीयकं[2] उपरिकायवस्त्रं, मुद्रिका-अङ्गुल्याभरणं तैः कृत्वा पिंगला पीतछायिकाऽङ्गुलयो येषां ते तथा, सर्वत्र पदे कर्मधारयो ज्ञेयः। उज्वलः-निर्मलः नेपथ्यो-वेषः रतिदः-सुखकृतरचितो वा, चिल्लगत्ति वस्त्राभरणं वा

१ कणदोरो इति भाषा २ उत्तरासण इति भाषा

**रयणचक्करयणप्पहाणा, नवनिहिवइणो, समिद्धकोसा, चाउरंता, चाउराहिं सेणाहिं समणुजातिज्जमाणमग्गा,**

लीन चिह्नगं ज्ञेयं तैः शोभमानं वा तदेव राजमानं—दीप्तमानं येषां ते तथा। तेजसा कृत्वा दिवाकर इव दीप्ताः—भासुराः। शरत्कालोत्पन्नं नवं उत्पद्यमानास्त्वर्थं यत् स्तनितं मेघगर्जितं तद्वत् मधुरः—श्रोत्रसुखकृत् गम्भीरो भूरिकालस्थायी स्निग्ध—स्नेहल इष्टतरो घोषः—स्वरो येषां ते तथा। वाचनान्तरे **सागरनवे वरसागरनिनाया** दृश्यते। उत्पन्नानि—प्राप्तानि समस्तरत्नानि तैः प्रधानाः, रत्नानि चतुर्दश तद्यथा—

**[1]सेणावइ १ गाहावइ २ पुरोहिय ३ तुरग ३ वड्ढई ५।**

**गय ६ इत्थी ७ चक्कं ८ छत्तं ९ चम्मं १० मणि ११ कागणि १२ खग्ग १३ दंडो य १४ ॥१॥**

चतुर्दश रत्नानि पुनः सेनापत्यादीनि। तत्र सेनापतिर्गङ्गासिन्धुपरपारविजयसमर्थः परैरप्रतिहतशक्तिः ॥१॥ गृहपतिर्गृहोचितशाल्यादिसर्वधान्यानां फलानां शाकानां च तत्कालमेव कर्त्ता सकलचक्रिसैन्यस्याऽपि पुरयिता च प्रस्तावे ॥२॥ पुरोधाः सर्वक्षुद्रोपद्रवशांतिकृत् ॥३॥ गजवाजिनौ प्रकृष्टवेगपराक्रमौ ॥४॥५॥ वर्धकिरवसरे सत्वरमेव समग्रसार्वभौमसैन्यस्याऽपि यथा विलोक्यमानभवनविरचनाद्यलंकर्मीण उन्मग्ना—निमग्नायुग्मनिम्नगासुगमपद्याकृच्च ॥६॥ स्त्रीरत्नं सर्वातिशायिकामसुखनिधानं ॥७॥ चक्रं सहस्रारं व्यामप्रमाणं सर्वायुधप्रधानममोघं च ॥८॥ व्याममात्रं छत्र प्रभुहस्तस्पर्शात् द्वादशयोजनविस्तारि वैताढ्योत्तरभागवर्त्तिम्लेच्छानुरोधि मेघकुमारोपसृष्टवारिधारानिवारि नवनवतिसहस्रकाञ्चनशलाकाग्रथितं काञ्चनमयोद्दण्डदण्डमण्डितं, बस्तिप्रदेशे

१ मुद्रित प्रवचनसारोद्धारपृष्ठ ५० तमे न्यस्तगाथाविवरणमेतद्

पञ्जरविराजितं अर्जुनाभिधानप्रधानपाण्डुरस्वर्णप्रत्यवस्तृतपृष्ठदेशं तपनातपवातवृष्ट्यादिदोषनाशकं च ॥९॥ चर्म्म द्विहस्तप्रमितं वैताढ्यपर्वतोत्तरदिग्वर्त्ति म्लेच्छकारिताऽतुच्छजलदवृष्टौ स्वामिकरामर्शात् द्वादशयोजनविस्तृतं व्योम्नि स्थितमुपरि छत्ररत्नाच्छादितं सकलचक्रिसेनाजनानां वसुधारावदाधाररूपं प्रातरुप्तापराह्णः निष्पाद्यमानशाल्याद्युत्पत्तिनिमित्तं । च ॥१०॥ मणिरत्नं चतुरङ्गुलप्रलम्बं द्व्यङ्गुलपृथुलं वैडूर्यमयं त्र्यस्रं षडंशं छत्रतुम्बस्थं हस्तिस्कन्धस्थं च द्वादशयोजनानि प्रकाशयति, क्षुद्रोपद्रवान् विद्रावयति, हस्तस्थे तस्मिन् स्थितयौवनः स्यात् अवस्थितकेशनखश्च ॥११॥ काकिणीरत्नं अष्टसौवर्णिकं चतुरङ्गुलं समचतुरस्रं सर्वविषापहारि तिमिस्राखण्डप्रपातागुहयोर्द्वादशयोजनावधितिमिरहरं चक्रिणा रजन्यां सैन्यान्तरन्यस्तं सूर्यवत् प्रकाशकरं चक्री च तिमिस्रागुहायां पूर्वपश्चिमभित्त्योः प्रत्येकं योजनान्तराणि पञ्चधनुःशतायामविष्कम्भाणि योजनं यावदुद्योतकानि चक्रनेम्याकाराणि वृत्तानि गोमूत्रिकाक्रमेणैकस्यां भित्तौ पञ्चविंशतिः, परस्यां भित्तौ चतुर्विंशतिः एवं एकोनपञ्चाशतं मण्डलानि तेन काकिणीरत्नेन खटिकावत् सुखोल्लेखेन लिखति भरताऽपरार्द्धदिग्विजयाय यावत् चक्री तावत्तान्येव तिष्ठन्ति, गुहाऽपि च तावदिवोद्घाटा तिष्ठति, एवं खण्डप्रपातगुहायामपि ज्ञेयं ॥१२॥ खड्गो द्वात्रिंशदङ्गुलप्रमाणः संग्रामेऽप्रतिहतशक्तिः ॥१३॥ दण्डरत्नं रत्नमयं पञ्चलताकं वज्रसारं व्यामप्रमाणं शत्रुसेनाविनाशकं विषमोन्नतभूमिभागसमत्वकारकं शांतिकरं मनोरथपूरकं सर्वत्राऽप्रतिहतं योजनसहस्रमप्यधः प्रविशति ॥१४॥ चतुर्दशाऽपि चैतानि प्रत्येकं यक्षसहस्राधिष्ठितानि, एषु च सेनापत्यादीनि सप्त पञ्चेन्द्रियाणि, चक्रादीनि सप्तैकेन्द्रियाणि पृथ्वीरूपाणि ॥ इति चतुर्दशरत्नस्वरूपं लेशतो लिखितं विस्तरस्तु ग्रन्थान्तरादवसेयः । निधिस्वरूपप्रतिपादका गाथाश्चेमाः जम्बूद्वीपप्रज्ञप्तीप्रवचनसारोद्धारगताः–

**नवनिधिपतयः, निधयश्चैवं**

नेसप्पे १ पण्डुयए २ पिंगल ए ३ सव्वरयणे ४ तहा महापउमे ५ काले य ६ महाकाले ७ माणवग ८ महानिही संखे ९।

ग्रन्थान्तरे संस्कृतभाषया श्लोको यथा—

महापद्मश्च १ पद्मश्च २, शङ्खो ३ मकरकच्छपौ ४–५।
मुकुन्द ६ कुन्द ७ नीलाश्च ८, खर्वश्च ९ निधयो नव ॥१॥ इति

नेसप्पंमि निवेसा गामागरनगरपट्टणाणं च। द्रोणमुहमडंबाणं खंधावाराण गिहाणं च ॥२॥
गणियस्स य गीयाणं, माणुम्माणस्स जं पमाणं च। धन्नस्स य बीयाणं, उप्पत्ती पंडुए भणिया ॥३॥
सव्वा आहरणविही, पुरिसाणं जा य जा य महिलाणं। आसाण य हत्थीण य, पिंगलगनिहिम्मि सा भणिया ॥
रयणाइं सव्वरयणंमि चउदस पवराइं चक्कवट्टीणं। उप्पज्जंति एगिंदियाइं पञ्चिंदियाइं च ॥५॥
चक्कासिछत्तदंडा, आउहसालाइं हुंति चत्तारि। चम्म–मणी–कागिणी–निही, सिरिगेहे चक्किणो हुंति ॥६॥
सेणावइ गाहावई, पुरोहिओ वड्ढइओ नियनयरे। थीरयणं रायकुले, वेयड्ढगिरिओ करितुरया ॥७॥
वत्थाण य उप्पत्ती, निप्फत्ती चेव सव्वभत्तीणं। रंगाण य धाऊणय सव्वा एसा महापउमे ॥८॥
काले कालन्नाणं, भव्वपुराणं च तेसुवि वंसेसु। सिप्पसयं कम्माणि य, तिन्नि पयाए हियकराइं ॥९॥

---

१ मुद्रित प्रवचनसारोद्धारपृष्ठाङ्क ५१ तमन्यस्तनवनिधिस्वरूपविवरणतोकिञ्चित्संगृहितं ग्रन्थसारेण

लोहस्स य उप्पत्ती, होइ महाकालिआगराणं च। रूप्पस्स सुवण्णस्स य, मणि-मोत्तियसिलपवालाणं ॥१०॥
जोहाण य उप्पत्ती आवरणाणं च पहरणाणं च। सव्वा य जुद्धनीई माणवगे दंडनीई य ॥११॥
नट्टविही नाडयविही, कव्वस्सय चउव्विहस्स निप्फत्ती। संखे महानिहिम्मि उ, तुडियंगाणं च सव्वेसिं ॥१२॥
चक्कट्ठपइट्ठाणा, अट्ठुस्सेहा य यनव य विक्खंभे। बारस दीहा मंजूससंठिया जण्हवीई मुहे ॥१३॥
वेरुलियमणिकवाडा, कणगमया विविहरयणपडिपुण्णा। ससिसूरचक्क लक्खण, अणुसमवयणोववत्तीया ॥
पलिओवमट्ठिईया निहि सरिनामा य तत्थ खलु देवा। जेसिं ते आवासा, अक्किज्जा आहिवच्चा य ॥१५॥

एतासां किञ्चित् क्रमात् व्याख्या—

नैसर्प्पैनवसु निधिषु कल्पपुस्तकानि शाश्वतानि सन्ति तेषु च विश्वस्थितिराख्यायते, तत्र यस्मिन्निधौ यदाख्यायते तत्तदाह—दशकुलसाहस्रिको ग्रामः ग्रसन्ति बुद्ध्यादिगुणानिति ग्रामः, आकरो—यत्र लवणादि उत्पद्यते, नगरं—राजधानी कररहितं वा, पत्तनं—जलपथस्थलपथयोरेकतरयुक्तं, द्रोणमुखं—जलपथस्थलपथयुक्तं, मडम्बं—अर्धतृतीयगव्युतान्तर्गामान्तररहितं स्कन्धावारः कटकनिवेशनं च शब्दात् आपणादीनां ग्रामादीनां च स्थापनमन्ये कुर्वन्ति व्याख्यानं—यदुक्तं—

ग्रामो वृत्त्यावृतः स्यान्नगरमुरुचतुर्गोपुरोद्भासिशोभं, खेटं नद्यद्रिवेष्टयं परिवृतमभितः कर्बटं पर्वतेन।
ग्रामैर्युक्तं मडम्बं दलितदशशतैः पत्तनं रत्नयोनिर्द्रोणाख्यं सिन्धुवेलावलयितमथ सम्बाधनं चाऽद्रिशृङ्गे ॥१॥

गणितस्य दीनारपुगफलादिलक्षणस्य गीतानां स्वरपाटवकरणादीनां प्रबन्धानां, मानं सेतिकादि तद्विषयं यत्तदपि मानमेव धान्यादि

तुरगवती गयवती रहवती नरवती विपुलकुलवीसुयजसा, सारयससिसकलसोमवयणा, सूरा, तेल्लोकनिग्गयप

मेयमिति भावः, उन्मानं तुलाकर्षादि, बीजादीनां शाल्यादीनां देशकालौचित्येनोत्पत्तिर्निष्पत्तिः ॥३॥ चतुर्थ्यादिगाथाचतुष्कमुत्तानार्थं ॥७॥ सर्वभक्तीनां सर्वेषां वस्त्रादिगतानां भक्तिविशेषाणां रंगाणां मञ्जिष्ठा—कुसुम्भादीनां धातूनां लोहादीनां ॥८॥ जगति त्रयो वंशास्तीर्थंकर१चक्रि२ बलवासुदेव३सत्का एषु यद्भाव्यं—भावि पुराणमतीतं, उपलक्षणत्वाद्वर्त्तमानं च शिल्पशतं- घट १ लोह २ चित्रक ३ वस्त्र ४ नापित ५ शिल्पानां प्रत्येकं विंशतिभेदत्वात्, कर्माणि—कृषिवाणिज्यादीनि जघन्यमध्यमोत्कृष्टभेदेन त्रीणि ९ शिलाः स्फाटिकादयः १० आवरणानां खेटकादीनां सर्वाऽपि युद्धनीतिःव्यूहरश्चनादिलक्षणा दण्डनीतिः सामादिचतुर्द्धा॥११॥ त्रुटिताङ्गानामातोद्यानां एषामुत्पत्तिराख्यायते—अन्ये च ते पूर्वोक्ताः पदार्थाः सर्वेऽपि नवसु निधिषूत्पद्यन्ते साक्षादेवेति व्याख्यानयन्ति ॥१२॥ प्रत्येकमष्टसु चक्रेषु प्रतिष्ठानमवस्थानं येषां ते अष्टचक्रप्रतिष्ठानाः प्राकृतत्वादष्टशब्दस्य परनिपातः, अष्टौ योजनानि उत्सेधः—उच्चैस्त्वं येषां ते वैडुर्यमणिकपाटाः मञ्जूषासंस्थानसंस्थिताः सदैव गङ्गामुखेऽवस्थिताः भरतविजयानन्तरं चक्रिणा सह पाताले चक्रिपुरमनुगताः ॥१३॥ शशिसूरचक्राकाराणि लक्षणानि चिह्नानि येषा ते शशिसूरचक्रलक्षणाः, प्राकृतत्वाज्जसु लोपः, अनुरूपा समाऽविषमा वदनोपपत्तिर्द्वारघटना येषां तेऽनुसमवदनोपपत्तिकाः ॥१४॥ आवासा—आश्रया आधिपत्याय—आधिपत्यनिमित्तमक्रेयाः नाऽधिपत्यं क्रयेण लभ्यं इति भावः ॥१५॥ इति नवनिधिस्वरूपं प्रवचनसारोद्धारवृत्तितो वर्णितमिति ॥

समृद्धो—भृतो विभूतिभिः कोशो भाण्डागारं येषां ते तथा त्रयः समुद्राश्चतुर्थो हिमवान् तान् यावत् अन्तःस्वरूपं आज्ञा येषां ते तथा, चतुर्भिः अंशैः हस्त्यश्वरथपदातिलक्षणैः सेनाभिः समनुगम्यमानो मार्गो येषां ते तथा। पुनस्तदेव दर्शयति तुरगाणां अश्वानां

भावलद्धसहा समत्तभरहाहिवा, नरिंदा, ससेलवणकाणणं च हिमवंतसागरंतं धीरा भूत्तुण भरहवासं जियसत्तू, पवररायसीहा, पुव्वकडतवप्पभावा, निविट्ठसंचियसुहा, अणेगवाससयमायुवंतो भज्जाहि य जणवयप्पहाणाहिं लालियंता अतुलसद्दफरिसरसरूवगंधे य अणुभवेत्ता तेवि उवणमंति मरणधम्मं अवितत्ता कामाणं।

भुज्जो भुज्जो बलदेववासुदेवा य पवरपुरिसा, महाबलपरक्कमा, महाधणुवियट्टका, महासत्तसागरा, दुद्धरा,

---

पतिः, गजानां—हस्तिनां पतिः, रथानां स्यन्दनानां पतिः, नराणां—मनुष्याणां पतिः, विपुलं—विस्तीर्णं कुलं येषां ते तथा, विश्रुतं यशो येषां ते तथा, शरत्काले जातो यः शशी सकलः परिपूर्णस्तद्वत् सौम्यं वदनं येषां ते तथा, शूराः स्वप्रतिज्ञापालने शौण्डीराः, त्रलोक्ये निर्गतः प्रकटीभूतो यः प्रभावो महिमा इति लब्धशब्दाः प्राप्तजयवादा इत्यर्थः, संपूर्णभरतक्षेत्राधिपाः, नरेषु सामान्यराजसु इन्द्राः दीप्यमानतेजसः, सह शैलैः—पर्वतैः वनैः सामान्यवनखण्डैः काननैर्नागरजननिर्म्मितवनैः नगरासन्नैर्वा हिमवान् पर्वतं यावत् सागराणां यावत् धीराः बुद्धिमन्तः सङ्ग्रामादौ वा अप्रतिहतशक्तयो धीराः उच्यन्ते, भुक्त्वा भरतक्षेत्रं, अत एव जितशत्रवः, प्रवराः प्रधाना ये ये राजानः मण्डलिकास्तेषु सिंहा इव सिंहा—दुर्द्धर्षत्वात्, एतादृशः केन हेतुना पूर्वकृततपःप्रभावात्, निविष्टं—उपभुक्तं सञ्चितं चार्जितं सुखं यैस्ते तथा, अनेकवर्षशतायुष्मन्तः, भार्याभिः—स्त्रीभिः कीदृशीभिः जनपदेषु—देशेषु प्रधानाभिः प्रकृष्टाभिः स्त्रीरत्नाभिश्च लाल्यमानाः विलास्यमानाः, अतुला निरुपमा ये शब्दस्पर्शरूपरसगन्धास्तान् अनुभवन्तः सन्तो न परैः उपभुज्यन्ते, ते तादृशा अपि उपनमन्ति—प्राप्नुवन्ति, मरणधर्मं मृत्युलक्षणं पर्यायं अतृप्ताः असंपूर्णाऽभिलाषाः कामार्थी अब्रह्माङ्गानाम्।

भूयः पुनः पुनः बलदेवाः—हलधराः, वासुदेवास्तु हरयः भरतार्द्धाधिपास्तेऽपि कामानां अतृप्ता मरणं प्राप्नुवन्तीति सम्बन्धः, ते

धणुद्धरा, नरवसभा, रामकेसवा, सभायरो सपरिसा, वसुदेवसमुद्दविजयमादियदसाराणं पज्जुन्नपतिव-संब-अनिरुद्ध-निसढ-उम्मुय-सारण-गय-सुमुह-दुम्मुहादीण जायवाणं अद्धुट्ठाणवि कुमारकोडीणं हिययदयिया, देवीए रोहिणीए देवीए देवकीए य आणंदहिययभावनंदणकरा, सोलसरायवरसहस्साणुजातमग्गा, सोलसदेवी-

---

किम्भूताः ? प्रवरपुरुषाः प्रधाननराः, कीदृशाः महाबलपराक्रमाः बलं शारीरं प्राणः पराक्रमस्तु साधनाभिमतफलः पुरुषाकारस्ते विद्यन्ते येषां तेषु पुनः कीदृशाः ? महाधनुर्विकर्षकाः सारङ्गादयस्ते विकर्षयन्ति चटापयन्तीति शेषः। महासत्त्वस्य सागरा इव सागराः, सत्त्वानामनिवार्याः, दुर्द्धराः परशत्रुणा, धनुर्द्धराः प्रधानधानुष्काः, नरवृषभाः-नरेषु वृषभाः, बलदेव-वासुदेवा वर्त्तमानायामप्यस्यामवसर्पिण्यां नवाऽऽसन् तथाऽपि बलदेववासुदेवेषु मध्ये नवमस्थानवर्त्तिनौ बहुजनप्रतीतौ इति कृत्वा तयोर्वर्णनं कीदृशास्ते ? सभ्रातरो द्वन्द्वापेक्षया सपरिच्छदाः सपर्षदः-सपरिवाराः, तथा वसुदेवसमुद्रविजयौ आदी येषां ते वसुदेवसमुद्रविजयमादिकास्ते च ते दशार्हाश्च तेषां दशार्हाणां मध्ये समुद्रविजय आदिमः वासुदेवश्च दशमः आह च यतः—

"समुद्रविजयोऽ १ क्षोभ्यः २ स्तिमितः ३ सागरस्तथा ४। हिमवान ५ चलश्चैव ६ धरणः ७ पुरणस्तथा ॥१॥ अभिश्चन्द्रश्च ९ नवमो वसुदेवश्च १० वीर्यवान्"इति। प्रद्युम्नप्रतिव-शंब-अनिरुद्ध-निषध-उल्मुक-सारण-गज-सुमुख-दुर्मुखादीनां यदोरपत्यानां-यादवानां अध्युष्टानां-अर्द्धाधिकतिसृणां अपि कुमारकोटीनामपि हृदयदयिताः-चेतोवल्लभाः। एतद्विशेषणं एतदाश्रित्य समुदायस्याऽपि विशेषणं, यथा राजताः सौवर्णाः कुलपर्वता भवन्ति इत्युक्तं परं सौवर्णो मेरुर्गृह्यते तद्वत् ज्ञेयं। देवकराजपुत्र्याः देवक्या कृष्णमातुः रोहिण्या बलदेवमातुः तस्याः आनन्दलक्षणो यो भावस्तस्य नन्दनं वृद्धिस्तं करणशीलाः। तथा षोडश राज-

सहस्सवरणयणहियदइया, णाणामणिकणगरयणमोत्तियपवालधणधन्नसंचयरिद्धिसमिद्धकोसा, हयगयरहसहस्ससामी,

गामा-गर-नगर-णेड-कब्बड-मडंब-दोणमुह-पट्टणासम-संबाह-सहस्सथिमियणिव्वुयपमुदित-जणविविहसासनिप्फज्जमाण-मेइणिसरसरियतलागसेलकाणणआरामुज्जाण-मणाभिरामपरिमंडियस्स दाहिणड्ढवेयड्ढगिरिविभत्तस्स लवणजलहिपरिगयस्स छव्विहकालगुणकामजुत्तस्स अद्धभरहस्स सामिका, धीरकित्तिपुरिसा,

वरसहस्रानुयातमार्गाः, षोडशानां देवीसहस्राणां वरनयनानां हृदयवल्लभाः, इदं विशेषणं वासुदेवापेक्षया ज्ञेयं, पुनः कीदृशाः ? नानाविधा मणयश्चन्द्रकान्ताद्याः, रत्नानि कर्केतनादीनि, प्रवालानि विद्रुमाणि, धनं गणिमादि चतुर्विधं तथा धान्यं चतुर्विंशतिविधं तस्य सञ्चयः-समूहस्तस्य ऋद्धिः तया समृद्धो भृतः कोशो-भाण्डागारो येषां ते तथा, हयगजरथानां सहस्रास्तेषां स्वामिनः, ग्राम-आकर-नगर-क्षेटक-कर्बट-मडम्ब-द्रोणमुख-पत्तन-आश्रम-संवाहानां सहस्राणि एतेषामर्थाः पूर्वव्याख्याताः स्तेषां स्वामिनः, स्तिमिता-निश्चला निर्भयत्वात् प्रमुदिताः ये जनाः हर्षवन्तः, विविधानि-अनेकजातीयानि यानि शस्यानि धान्यानि तैः निष्पाद्यमाना मेदिनी यत्र तथा, सरोभिर्जलाशयविशेषैः सरितो-नद्यः, तटाका-महत्सरांसि, शैला-गिरयः, काननानि-सामान्यवृक्षोपेतानि नगरासन्नवर्त्तिनः, आरामा-दम्पतीरतिस्थानलतागृहोपेताः, उद्यानानि-पुष्पादिमद्वृक्षाः मनोभिरामास्तैः परिमण्डितं यद्भरतार्द्धं तत्तथा तस्य, दक्षिणार्द्धवैताढ्यगिरिस्तेन विभक्तं चेति विग्रहस्तस्य, लवणसमुद्रेण परिगतं वेष्टितं तस्य, षड्विध-

१ ऋतुषट्कं द्विमासैर्ज्ञेयं वर्षा-शरत्-हेमन्त-शिशिर-वसंत-ग्रीष्माभिधानाः

**ओहबला, अइबला, अनिहया, अपराजियसत्तुमद्दगरिपुसहस्समाणमहणा, साणुक्कोसा, अमच्छरी, अचवला, अचंडा, मितमंजुलपलावा, हसियगंभीरमहुरभणिया, अब्भुवगयवच्छला, सरण्णा, लक्खणवंजणगुणोववेया, माणुम्माणपमाणपडिपुन्नसुजायसव्वंगसुंदरंगा, ससिसोमागारकंतपियदंसणा, अमरिसणा, पयंडडंडप्पयार-**

कालस्य ऋतुषट्करूपस्य ये गुणाः कार्याणि तैः क्रमेण-परिपाट्या कामं—अत्यर्थं सुखं तेन युक्तस्य, अर्द्धभरतस्य भरतार्द्धस्य स्वामिका—नाथाः। धीराणां वीराणां या कीर्त्तिस्तत्प्रधानाः पुरुषाः ओघेन—प्रवाहेण अच्छिन्नं अत्रुटितं बलं प्राणो येषां ते अतिशायिबलाः, पुरुषान्तरबलान्यतिक्रान्ताः, अनिहताः न केनाऽपि मारिताः, अतएव परैः शत्रुभिः न निर्जिताः तान् शत्रून् मर्दयन्ति ये ते तथा, रिपूणां सहस्रं तस्य मानो—दर्प्पः तं मर्दयन्ति ते रिपुसहस्रं तस्य मानमर्दनाः, सानुक्रोशाः आश्रितानां सदयाः अमत्सरिणः—परगुणग्राहिणः, कायिकादिचापलपरहिता अचपलाः, अनिमित्तकोपरहिताः अचण्डा, परिमितः कार्योत्पन्ने तदपि मञ्जुलो—मधुरः प्रलापो—जल्पनं येषां ते, तेषां पाठान्तरे मधुरपरिपूर्णसत्यवचना इत्यर्थः, । हसितं ईषत् स्मितं गभ्भीरं—अतुच्छं मधुरं आयतिशुभं भणितं येषां ते तथा, अङ्गीकृतं वात्सल्यं-हितं यैस्ते तथा, शरणदायकत्वात् शरण्याः शरणागतवज्रपञ्जरबिरुदधारकाः, लक्षणानि यथा—

अस्थिष्वर्थाः सुखं मांसे, त्वचि भोगाः स्त्रियोऽक्षिषु। गतौ यानं स्वरे चाज्ञा, सर्वं सत्त्वे प्रतिष्ठितम् ॥१॥

तथा व्यञ्जनानि मषीतिलकादीनि तयोर्यो गुणस्तेनोपेता ये ते। मानमष्टोत्तरशताङ्गुलिविंशत्याधिकं वा[2], उन्मानं—जलद्रोणार्द्धभारतुलारोपितेन जलभृतकुंडिककोटितः प्रमाणोपेतः प्रतिपूर्णः इन्द्रियावयवादिभिः तेन सुजातं सुविभक्तं तैः सर्वाङ्गैः सुन्दराणि अङ्गानि

२ प्रत्यन्तरे मानं जलद्रोणप्रमाणता उन्मानं तूलारोपितस्यार्द्धभारप्रमाणता

गंभीरदरिसणिज्जा, तालद्धउब्विद्धगरुलकेऊ, बलवगगज्जंतदरितदप्पितमुट्ठियचाणूरमूरगा, रिट्ठवसभघातिणो, केसरिमुहविप्फाडगा, दरितनागदप्पमद्दणा, जमलज्जुणभंजगा, महासउणिपूतणारिवू, कंसमउडतोडगा,

बाहूरुकट्यादीनि येषां ते तथा, शशिवत् सौम्याकार आह्लादकत्वात् कान्तं-मनोहरं प्रियं-प्रेमकथकं दर्शनं येषां ते तथा। अमर्षणा अपराधाऽसहिष्णवः, अथवा अमसिणा कार्येषु अनलसा-समसृणाः, प्रकाण्डः प्रचण्डो वा दुःसाध्यसाधनीयत्वात् प्रचण्डदण्डप्रकार आज्ञाविशेषो येषां ते तथा। अलक्ष्यमाणहृदयत्वेन गम्भीरं दर्शनीयं दृश्यं येषां ते, गुढाकारेङ्गितत्वात् गुप्तमन्त्राः सर्वत्र कर्मधारयः। तालो-वृक्षविशेषः ध्वजः-केतुर्येषां ते तथा, उच्छ्रितो-उन्नतो गरुडकेतुर्येषां ते तथा द्वन्द्वः। रामकेशवाः बलवन्तः गर्जन्तः अस्माकं को प्रतिमल्लः ? इति शब्दं कृतवन्तः, दरितानां दप्तानां मध्ये सञ्जातदर्पिका ये ते तथा। मुष्टिकनामानं तथा चाणूराभिधानं मल्लं मूरयन्ति चूर्णयन्ति ये ते तथा, पूर्वं बाल्यावस्थायां कंसेन कृष्णवधार्थं राजसमक्षं मल्लौ मुक्तौ, तत्र बलदेवेन मुष्ठिकमल्लो, कृष्णेन चाणूरमल्लो हतः, इतश्चान्यान्यपि विशेषणानि कानिचिद् ज्ञेयानि बलहरिसम्बधीनि। कंससत्कं रिष्ठाभिधानवृषभं घातयन्तीति, केशरिमुखविस्फाटकाः-विदारका इदं विशेषणं प्रथमहरिमाश्रित्य स हि त्रिपृष्टाभिधानो हरिर्जनपदोपद्रवकारिणं विषमगिरिगुहावासिनं सिंहं उत्तराधरोष्ठग्रहणेन विदारयामासेति श्रुतिः अथवा कंससत्ककेशिनामा दुष्टाश्वस्तन्मुखदारकाः कृष्णः कूर्पर‌प्रक्षेपेण दारितवान्। दप्तनागदर्पमथनाः स हि यमुनाहृदवासिनं घोरविषं नागं पद्मग्रहणार्थं तत्राऽवतीर्यमथितवान् इदमपि कृष्णमाश्रित्य विशेषणं। यमलार्जुनभञ्जकाः इदमपि कृष्णमाश्रित्य विशेषणं स हि पितृवैरिणौ विद्याधरौ रथारूढस्य गच्छतो मारणार्थं पथि विकुर्वितौ यमलार्जुनवृक्षरूपौ रथस्य मध्येन गच्छतस्तौ चूर्णितवानिति। तथा महाशकुनि-पुतनारिपुमर्दका इदमपि कृष्णस्य विशेषणं कृष्णपितृवैरिण्योर्महाशकुनिपुतना-

जरासिंघमाणमहणा, तेहि य अविरलसमसहियचंदमंडलसमप्पभेहिं सूरमिरीयकवयंविणिम्मुयंतेहिं सपति-

भिधानयोर्विद्याधरयोषितोः विकुर्वितप्रलम्बगात्रयोर्बालावस्थकृष्णपक्षपातिदेवतया विनिपातिते इति श्रुतिः। कंसमुकुटमोटका इदमपि कृष्णविशेषणं—यदा कृष्णेन मल्लो निपातितस्तदा मथुरेशः केशवाऽमर्णतस्तमाकारितवान् सोऽपि पर्षद्यागत्य युयुत्सुः व्युद्गीर्णखड्गो मुकुटदेशे गृहीत्वा सिंहासनात् भुवि समाकृष्य पातितवान्। तथा जरासङ्घमानमथनाः राजगृहेशं जरासङ्घं नवमप्रतिहरिं संग्रामप्रवृत्तं कंसमारणकुपितं मारितवानिति। तथा तैरातपत्रैर्विराजित इति सम्बन्धः। अविरलानि—घनानि शलाकावत् समानि—तुल्यानि एकत्वेन सहितानि तादृशानि यानि चन्द्रमण्डलानि शशधरबिम्बवत् प्रभा येषां तानि चन्द्रमण्डलसमप्रभाणि, तैः चन्द्रमण्डलसमप्रभैः, पुनः कीदृशैः? सूरमरीचयः—आदित्यकिरणास्ते इव सूरमरीचयस्तेषां कवचं परितस्तेजसः प्रसरात् तं प्रति विनिर्मुञ्चद्भिः। वाचनान्तरे पुनरातपत्रवर्णकं एवं दृश्यते—

'अब्भपडल पिंगुलुज्जलेहिं अभ्रपटलानीवाभ्रपटलानि बृहच्छायाहेतुत्वात्, पिङ्गलानि—कपिशानि सौवर्णशलाकामयत्वात्, उज्वलानि—निर्मलानि यानि तथा तैः। अविरलसमसहियचन्दमण्डलसमप्पहेहिं—अविरलं घनसहितं सम्पूर्णं यत् चन्द्रमण्डलं चन्द्रबिम्बं तद्वत् समा—सदृशा प्रभा येषां तानि तैः। मंगलसयभत्तिच्छेयचित्तियखिंखिणिमणिहेमजालविरइयपरिगय—पेरंतकणयघंटियपयलियखिणिखिणिंतसुमहुरसुइसुहसद्दालसोहिएहिं—माङ्गल्यानां या शतसङ्ख्यास्तासां भक्तयो रचना छेकेन—निपुणशिल्पिना चित्रितानि यानि तानि तथा किंकिणीभिर्क्षुद्रघण्टिकाभिर्मणिहेमजालेन—वररत्नकनकजालकेन कृतेन विशिष्टरतिदेन वा परिगतानि—सम-

१. गन्त्रोरूपयोः गन्त्रीसमारोपितबाल्यावस्थकृष्णयोः २ उत्कीर्ण

न्ताद्वेष्टितानि यानि तानि तथा पर्यन्तेषु–प्रान्तेषु कनकघंटिकाभिः कम्पमानाभिः खिणिखिणायमानाभिः सुमधुरः शुचिः–पवित्रो निरवद्यश्च श्रुतिसुखश्च यः शब्दस्तेन अलं–अत्यर्थं शोभितानि तैः। सपयरगमुत्तदामलंबंतभूषणेहिं–सप्रतरकाणि–आभरणविशेषाणि यानि मुक्तादामानि–मुक्ताफलमाला लम्बमानानि–प्रलम्बमानानि भूषणानि तथा तैः। नरिंदवामप्पमाणरुंदपरिमंडलेहिं–नरेन्द्राणां वामप्रमाणेन–प्रसारितेन भुजयुगलमानेन रुन्दानि–विस्तीर्णानि परिमण्डलानि यानि तैः, सीयायववायवरिसविसदोसणासएहिं–शीतातपवातवर्षविषदोषाणां नाशकैः। तिमिररयमलबहुलपडलधाडणपहाकरेहिं–तमो–ध्वान्तं रजो–रेणुः मलोऽशुचिरजस्तेषां बहुलं–घनं यत्पटलं वृन्दं तस्या धाडिनी–नाशिनी या प्रभा–कान्तिस्तत्कराणि तत्कारीणि यानि तथा तैः। मुद्धमुहसिवच्छायसमणुबद्धेहिं–मूर्द्धा–मस्तकं मुखं–वक्त्रं तयोः शिवा–निरुपद्रवा या छाया–आतपनिराकरणलक्षणा तया समनुबद्धानि अनवच्छिन्नानि यानि तानि तैः। [वेरुलियदंडसज्जिएहिं–वैडूर्यमयदण्डेषु सज्जितानि–वितानितानि यानि तानि तथा तैः।] वइरामयवित्थिण्णणिउणजोइयअडसहस्सवरकंचणसिलागनिम्मिएहिं–वज्रमयविस्तीर्णा शलाकानिवेशनस्थाने निपुणेन शिल्पिना योजिता–निवेशिता अष्टोत्तरसहस्रसंख्या याः काञ्चनशलाकास्ताभिर्निर्मितानि तथा तैः। सुविमलरययसुट्ठुच्छइएहिं–सुष्ठु विमलेन रौप्येन–रजतेन सुष्ठु छदितानि छादितानि यानि तथा तैः,। निउणोवियमिसिमिसिंतमणिरयणसूरमंडलवितिमिरकरनिग्गयपडिहयपुणरवि पच्चोवयंतचवलमरीइकवयं विणिम्मुयंतेहिं–निपुणैः कुशलैः शिल्पिभिर्निपुणं यथा भवति तथा ओपितानि मिसिमिसायमानानि–चिकिचिकायमानानि यानि मणयश्च रत्नानि तेषां सम्बन्धि यन्मरीचिकवचं–किरणवृन्दैः सन्नाहमिव भूतं, किंभूतं ? सूरमण्डलस्य वितिमिरा–विहतान्धकाराः किरणा निर्गताः–अवपतिता विप्रतिहताः–प्रतिस्खलिताः सन्तः प्रत्यवपतन्तः–प्रतिनिवर्त्तमाना यतः तत्तथा–तच्च तच्चञ्चलमरीचिकवचमित्यर्थे

दंडेहिं आयवत्तेहिं धरिज्जंतेहिं विरायंता, ताहि य पवरगिरिकुहरविहरणसमुट्ठियाहिं, निरुवहयचमरपच्छिम-सरीरसंजाताहिं अमइलसेयकमलविमुकुलुज्जलित--रययगिरिसिहरविमलससिकिरण—सरिसकलहोयनिम्म-लाहिं पवणाहय—चवलचलियसललियपणच्चियवीइपसरियखीरोदगपवरसागरुप्पूरचंचलाहिं माणससरपसरपरि-

समासो ज्ञेयः। तद् विनिर्मुञ्चद्भिरित्यधिकृत्येति वाचनान्तरार्थो लिखितः ग्रन्थकृता श्रीमद्ज्ञानविमलसूरिणेति।

पुनः किंविशिष्टैः सप्रतिदण्डैः अतिमहान्तत्वात् एकेन दण्डेन धारयितुमशक्यत्वात् प्रतिदण्डोपेतैः तादृशैः आतपत्रैः छत्रैर्ध्रियमाणैर्विराजमाना इति व्यक्तं, तैश्च अतिशयवद्भिश्चामरैः कलिता इति सम्बन्धः। किम्भूतैः प्रवरगिरेर्यत् कुहरं तत्र यत् विचरणं गत्वामिति अध्याहारः, तस्मिन् समुद्धृतानि—उत्क्षिप्तानि कण्टकशाखिनि च लग्नभयतो यानि तानि तथा तैश्चामरैः सूत्रे तु चामरशब्दस्य स्त्रीत्वं विवक्षितं दृश्यते। निरुपहतं—निरोगत्वेन निरुपद्रवं चमरीगवां यत् पश्चिमशरीरं—देहपश्चाद्भागः पुच्छप्रदेशस्तत्र जातानि—उत्पन्नानि तथा तैः। अमलिनं—निर्मलं पाठान्तरे आमलितं—आमृदितं सितं—श्वेतकमलं पुण्डरीकं, विमुकुलं—विकसितं उज्ज्वलितं दीप्तं यत् रजतगिरिशिखरं विमलाश्च ये शशिनश्चन्द्रस्य किरणाः—रश्मयः तत्सदृशानि वर्णतो यानि तानि, तथा कलधौतवत्—रजतवत् निर्मलानि यानि तैः सर्वत्र कर्मधारयः ततस्तैः। पवनाहतो—वायुना ताडितः सन् चपलं यथा भवत्येवं चलितः सललितं प्रवृत्त इव सललितप्रवृत्तः—प्रवर्तितः वीचिभिर्महत्कल्लोलैः उत्स्यूताः क्षीरोदस्य—प्रवरसागरस्य य उत्पूरो—जलपूर इव तद्वत् चञ्चलानि यानि तथा तैः। एतादृशानि चामराणि हंसवधूपमयन्त्याऽऽह—मानसाभिधानस्य सरसः प्रसरे—विस्तारे परिचितोऽभ्यस्त आवासो—निवासो विशदश्च—धवलो वेषो—नेपथ्यं यासां तास्तथा ताभिः, कनकगिरिशिखरसंश्रिताभिः। अवपात—उच्चैर्भूत्वा न्यग्पतनं, उत्पातो—न्यग्भूय

चियावासविसदवेसाहिं कणगगिरिसिहरसंसिताहिं उवायउप्पातचवलजयिणसिग्घवेगाहिं हंसवधूयाहिं चेव कलिया, नाणामणिकणगमहरिहतवणिज्जुज्जलविचित्तडंडाहिं सललियाहिं नरवतिसिरिसमुदयप्पगासणकरीहिं वरपट्टणुग्गयाहिं समिद्धरायकुलसेवियाहिं कालागुरु-पवरकुंदुरुक्क-तुरुक्कधूववसवासविसदगंधुद्धुयाभिरामाहिं चिल्लिकाहिं उभयोपासंपि चामराहिं उक्खिप्पमाणाहिं सुहसीतलवातवीतियंगा, अजिता, अजितरहा, हलमुसलकणगपाणी, संखचक्कगयसत्तिणंदगधरा, पवरुज्जलसुकतविमलकोथूभतिरीडधारी, कुंडलउज्जोवियाणणा,

---

उच्चैर्भवनं तयोश्चपलवत् जविनो-वेगवन्तस्तद्वत् शीघ्रो वेगो-गतिर्यासां तास्तथा हंसवधूभिरिव-सहचरीभिरिव चेव-निश्चितं नित्यं चामरधारिकाभिः कलिता-व्याप्ता वासुदेवाः प्रक्रमत्वात्। पुनरपि किंभूतैश्चामरैः नानाविधमणयो-रत्नानि कनकं-पीतवर्णं महार्घ्य-बहुमूल्यं यत् तपनीयं-रक्तवर्णसुवर्णं एतेषां उज्ज्वला विचित्रा दण्डा येषां ते तैः। सललितैः-लावण्ययुक्तैः नरपतिश्रीसमुदयप्रकाशनकरैरेतादृशास्तैः कृत्वा राज्यलक्ष्मीर्लक्ष्यते, प्रवरपत्तनोद्गतैः-पत्तनविशेषनिर्मापितं हि शिल्पं प्रधानं भवति, समृद्धराजकुलसेविताभिः एतावता असमृद्धराजकुलस्य तु तद्योग्यताऽपि नैव, कालागुरुः-कृष्णागुरुः कुन्दरुक्कं श्वेतगन्धद्रव्यं प्रवरतुरुकं-चीडारसः सिल्हकं-गन्धद्रव्यं एतल्लक्षणो यो धूपस्तद्वासनया यो विशदः शब्दः गन्धो-गुणविशेषः उध्धूत-उद्भूतो-अभिरामो रम्यो येषां तानि तथा तैः, चिल्लिकाहिंति-दीप्यमानैः, उभयोरपि पार्श्वयोः चामरैः उत्क्षीप्यमाणैर्वीज्यमानैः सुखशीतलवातदानेन चामराणामेव वीजितानि अङ्गानि येषां ते तथा। अजिता-अपराजिताः परैरिति गम्यं। अजितरथा-अपराभूतरथा वर्त्मनि इति सर्वत्राऽस्खलितरथा इत्यर्थः, हलं-शीरं मुशलं-उदूखलं खण्डनकाष्टं तदाकारं शस्त्रं कनको-बाणस्ते पाणौ-हस्ते येषां ते बलदेवमाश्रित्य विशेषणमिदं। शंखः-

पुंडरीयणयणा, एगावलीकंठरतियवच्छा, सिरिवच्छसुलंछणा, वरजसा, सव्वोउय-सुरभिकुसुमसुरइय-पलंबसोहंतवियसंतचिल्लवणमालरतियवच्छा, अट्ठसयविभत्तलक्खण-पसत्थसुंदरविराइयंगमंगा, मत्तगयवरिंद-ललियविक्कमविलसियगती, कडिसुत्तगनीलपीतकोसिज्जवाससा, पवरदित्ततेया, सारयनवथणियमहुरगंभीरनिद्धघोसा,

---

पाञ्चजन्याऽभिधानः, चक्रं-सुदर्शनं, गदा-कौमुदिकी नाम्नी, शक्तिस्त्रिशूलविशेषः नन्दकाभिधानः खड्ग एतान् धारयन्ति ये ते इदं च वासुदेवमाश्रित्योक्तं। पुनः प्रवरः प्रधानः उज्वलः सुकान्तः-सुष्ठुरम्यो विमलो-निर्मलः कौस्तुभो-वक्षोमणिः तथा तिरीटं-मुकुटं तान् धारयन्ति ये ते तथा। कुण्डलेन-कर्णाभरणेन उद्द्योतितं द्योतितं आननं येषां ते तथा। पुण्डरीकं-पद्मं तद्वद् नयने येषां ते तथा। एकावली कण्ठे रचिता-कृता उरसि-वक्षसि हृदये येषां ते। श्रीवत्सः प्रतीतः स एव लाञ्छनं येषां ते उन्नतचतुरस्रोंतर्वृत्तः श्रीवत्सः कथ्यते। वरं-प्रधानं यशः सर्वदिग् प्रसरं येषां ते तथा, एकदिग्गामिनी कीर्त्तिः सर्वदिग्गामुकं यश इति वचनात्। सर्वर्त्तुकैः-सर्वसामयिकैः सुरभिः-सुगन्धिकुसुमैः सुरचिता प्रलम्बा शोभमाना विकसन्ती-विकचा फुल्लिता चिल्लिका-दीप्यमाना या वनमाला मालाभरणविशेषा रतिदा वा वक्षसि येषां ते तथा। अष्टशतेन विभक्तलक्षणानां-स्वस्तिकादिचिन्हानां प्रशस्तानि-सुन्दराणि विराजितानि च अङ्गोपाङ्गानि येषां ते तथा। मत्तो-दृप्तो यो गजवरेन्द्र-ऐरावणस्तद्वत् ललितः-सविलासो यो विक्रमः चंक्रमणं गमनं तद्वत् विलासयुक्ता-विलसिता गतिर्येषां ते तथा। कटिसूत्रप्रधानानि नीलानि पीतानि च कौशेयकानि-वस्त्ररूपाणि -वासांसि येषां ते तथा। एतावता नीलवस्त्राः बलदेवाः पीतवसनाः वासुदेवाः। पुनः कीदृशाः ? प्रवरदीप्ततेजसः-प्रधानभासुरकान्तयः। शरदि भवः शारदः-शरत्कालोत्पन्नो नवीनो यो घनो-मेघस्तस्य स्तनितं-गर्जितं तद्वन् मधुरः-कर्णसुखकृतगम्भीरोऽगाधः स्निग्धो मन्द्रो घोषो-

नरसीहा, सीहविक्कमगई, अत्थमियपवररायसीहा, सोमा, बारवइपुन्नचंदा, पुव्वकयतवप्पभावा, निविट्ठसंचियसुहा, अणेगवाससयमाउवंता भज्जाहि य जणवयप्पहाणाहिं लालियंता, अतुलसद्दफरिसरसरूवगंधे अणुभवेत्ता तेवि उवणमंति मरणधम्मं अवितत्ता कामाणं ॥

भुज्जो मंडलियनरवरेंदा, सबला, सअंतेउरा, सपरिसा, सपुरोहियामच्चदंडनायक–सेणावति–मंतिनीति-

---

ध्वनिर्येषां ते तथा। नरेषु सिंहा–दुर्द्धर्षत्वात् सिंहस्य इव विक्रमश्च गतिश्च येषां ते तथा। अत्थमियत्ति–येषु बलदेवादिषु मध्ये अस्तंगतौ रामकेशवौ येषां ते एतावता यस्मिन् वंशे बहवो राजानो रामकेशवाः इति व्याख्यानं, अन्यपक्षे तु अस्तमिता ययोरग्रे प्रवरा राजसिंहा येषां ते तथा, 'दीर्घत्वं प्राकृतशैल्यात्' अथवा तेऽपि अस्तंप्राप्ता इति। सौम्याकृतित्वात् सौम्याः। द्वारावत्या आनन्दकत्वात् पूर्णचन्द्रा ये ते तथा। पुनः कीदृशाः ? पूर्वकृततपःप्रभावाः–पूर्वभवाचीर्णतपोमाहात्म्यवन्तः, निविष्टप्राक्तनपुण्योदयतः सञ्चितं–संभृतं सुखं इन्द्रियजन्यं यैस्ते तथा। अनेकवर्षशतप्रमाणमायुष्मन्तः–अनेकपदेन वर्षसहस्रादि ग्राह्यं। भार्याभिः–स्त्रीभिः कीदृशाभिर्जनपदप्रधानाभिर्देशेषु रत्नतुल्याभिः ताभिर्लालितं–पालितं अङ्गं येषां ते तथा। अत एव अतुलान्–अनुपमानान् शब्दरूपरसगन्धस्पर्शान् अनुभवन्तो–यथायोग्यमापालयन्तः अनुभूय च ते अपि बलदेववासुदेवा यद् प्राप्नुवन्ति मरणधर्म–मरणसमयं, कीदृशाः सन्तः ? कामानां–विषयाणां अतृप्ताः सन्तो विषयपिपासिताः एव म्रियन्ते।

भूयो वारंवारं तथा इत्यर्थः, मण्डालिकनरेन्द्राः–मण्डलाधिपतयः तद्वदेव, कीदृशाः ? सबलाः सकटका–बलसहिताः, सान्तःपुराः–स्त्रीसहिताः, सपर्षदः–सपरीवाराः, सपुरोहिताः–शांतिककर्मकारिणस्तैः अमात्यैश्च सहिताः, पुनः कीदृशाः ? सर्वे–सकला ये

कुसला, नाणामणिरयण-विपुलधणधन्नसंचयनिहीसमिद्धकोसा, रज्जसिरिं विपुलमणुभवित्ता विक्कोसंता, बलेण मत्ता तेवि उवणमंति मरणधम्मं अवितत्ता कामाणं ।

भुज्जो उत्तरकुरुदेवकुरुवणविवरपादचारिणो नरगणा भोगुत्तमा भोगलक्खणधरा, भोगसस्सिरीया, पसत्थ-सोमपडिपुण्णरूवदरसणिज्जा, सुजातसव्वंगसुंदरंगा, रत्तुप्पलपत्तकंतकरचरणकोमलतला, सुपइट्ठियकुम्मचारु-

दण्डनायकाः-दण्डकर्त्तारः सेनापतयः स्कन्धावारस्थापनाधिकारिणः मन्त्रिणो-विचारकारकाः मन्त्रिणः, नीतिः सामदानभेददण्डादि-कारकास्तस्यां कुशला-प्रवीणाः। नानाप्रकारा मणयश्चन्द्रकान्ताद्याः रत्नानि-कर्केतनादीनि विपुलं-विस्तीर्णं धन-धान्यानां सञ्चयैः-निधिभिश्च समृद्धः-परिपूर्णः कोशो-भाण्डागारो येषां ते तथा। विपुलां-महत्तमां राज्यश्रियं-राज्यलक्ष्मीं अनुभूय च विक्रोशन्तः-परान् आक्रोशयन्तः, अथवा मानेन विकाशवन्तः तथा विगतकोशाः सन्तः, तथा बलेन मत्ताः दृप्तासन्तः, तेऽपि तादृशा अपि प्राप्नुवन्ति मरणधर्मं-परलोकं अतृप्ताः कामानां भूयो भूयो वारंवारं ।

अथ युगलिकानामपि तदेवं दर्शयति-तथा उत्तरकुरुदेवकुरूणां क्षेत्राणां यानि वनविवराणि तेषु पादचारिणः-चरणचारिणः यानाऽभावात् ये ते नरगणा-युगलिकनरा देवकुरु-उत्तरकुरुग्रहणादन्येऽपि हेमवत्-रम्यक्-हरिवर्षैरण्यवतकादीनां ग्रहणं कृतं। भोगैः उत्तमाः प्रधानास्तादृशाः नराः, भोगसूचकानि लक्षणानि स्वस्तिकादीनि धरन्ति ते भोगलक्षणधराः, भोगैः सश्रीकाः भोगैः शोभमानाः, प्रशस्तं-प्रतिपूर्णं सौम्यं आकृतिरूपं येषां ते, अतएव दर्शनार्हाः, ततस्सुजातं निर्मितं सर्वाङ्गेषु सुन्दरं प्रधानांगा इति पूर्व-

१ अस्मिन् हि नरो युगलिको भवेत्

चलणा, अणुपुव्वसुसंहयंगुलीया, उन्नयतणुतंबनिद्धनखा, संठितसुसिलिट्ठगूढगोंफा, एणीकुरुविंदवत्तवट्टाणुपुव्वि-
जंघा, समुग्गनिसग्गगूढजाणू, वरवारणमत्ततुल्लविक्कम-विलासितगती, वरतुरगसुजायगुज्झदेसा, आइन्नहय-

वत्। पुनः कीदृशाः ? रक्तोत्पलपत्रवत् कान्तानि मनोज्ञानि करचरणानां हस्तपादानां तलानि येषां ते; चरग-नख-पाणि-रसना-दन्तच्छद-लोचनान्ताः सप्तरक्ताः सप्ताङ्गलक्ष्मीदा इति वचनात्। पुनः कीदृशाः ? सुप्रतिष्ठिताः-सुप्रतिष्ठावन्तः सुस्थिराः कूर्म्मवत् कच्छपवत् चारवः शोभनाश्चरणा येषां ते तथा, अनुपूर्वेण-परिपाट्या वर्द्धमाना हीयमाना वा प्रतीतसत्यत्वेन सुसंहता घना-अविरला-निच्छिद्रा अङ्गुल्यो येषां ते तथा, वाचनान्तरे आनुपुव्वीसुजायपीवरंगुलिका पाठः। पुनः कीदृशाः ? उन्नता तनवः-सूक्ष्माः ताम्रा ताम्रवत् अरुणा स्निग्धा झगझगायमाना नखाः करजा येषां ते, संस्थानविशेषतया सुस्थितौ सुश्लिष्टौ-सुघटितौ मांसलत्वात् अनुपलक्षितौ गूढौ-गुप्तौ गुल्फौ घुंटकौ येषां ते तथा। एणी-मृगी तस्याः जङ्घा तथा कुरुविन्दस्तृणविशेषः तथा केशाभरणं वा वर्त्तवस्तत्र वलनको-दवरकविशेषः एतानीव वृत्ते-वर्त्तुले अनुक्रमेण स्थूलस्थूले जङ्घे येषां ते तथा, तथा एण्यो-स्नायवः कुरुविन्दाः-कुटिलकाः व्यक्ता वृक्षविशेषाः तद्वद्वृत्ता जङ्घा येषां ते इत्यपि व्याख्या। समुद्गकं-सपिधानं पेटाभं तद्वत् निसर्गतः-स्वभावतो मांसलत्वात् गूढं-गुप्तं अनुपलक्षिते जानुनी येषां ते तथा, वरवारणस्य-मत्तेभस्य तुल्यः-सदृशो विक्रमो-विशिष्टक्रमन्यासः-पादन्यासस्तेन विलासिता-विलासेन युक्ता मन्थरा गति-र्गमनं येषां ते तथा। वरतुरगस्येव सुजातः-सुनिष्पन्नः गुह्यदेशो-लिङ्गलक्षणोऽवयवो येषां ते तथा, लघुगुप्तमेहना इत्यर्थः। आकीर्णो जात्यश्वस्तद्वत् निरुपलेपाः-पुरीषादिमलानाविलाः, प्रमुदितो-हृष्टो यो वरतुरगः सिंहश्च

१ नलीयानी परह इति भाषा २ घुंटण इति भाषा

व्व निरुवलेवा, पमुइयवरतुरगसीहअतिरेगवट्टियकडी, गंगावत्तदाहिणावत्ततरंगभंगुर-रविकिरणबोहियविकोसायंत-पम्हगंभीरविगडनाभी, साहतसोणंदमुसल-दप्पणनिगरियवरकणगच्छरुसरिस-वरवइरवलियमज्झा, उज्जुगसमसहिय-जच्चतणुकसिणणिद्धआदेज्ज-लडहसूमालमउयरोमराई,झसविहगसुजातपीणकुच्छी,झसोदरा, पम्हविगडनाभा[संनतपासा]संततपासा, सुंदरपासा, सुजातपासा, मितमाइयपीणरइयपासा, अकरंडुयकणगरु-

ताभ्यां सकाशात् अतिरेकेण अतिशयेन वर्त्तिता-वर्त्तुला कटिर्येषां ते तथा। गङ्गाया आवर्त्तः-पयसां भ्रमस्तद्वत् दक्षिणावर्त्ता-तरङ्गभङ्गुरा च रविकिरणैर्बोधितं-विकाशीकृतं यत्पद्मं-कमलं तद्वद्गम्भीरा विकटा घना नाभिर्येषां ते एतावता निम्ना अगाधा विकाशवती अरोमा नाभिः। संहितं-संक्षिप्तं यत् शोणदं-दन्तकाष्ठं, मुशलं प्रसिद्धं, दर्प्पणगण्डो-दर्प्पणहस्तः निगरियत्ति-निगरिका-मूषा तया शोधितं यत् वरं-प्रधानं कनकं तस्य यः त्सरुः-खड्गादिमुष्टिः एतेषां द्वन्द्वः तैः सदृशो यः वरवज्रवत् वलितः-क्षामो मध्यो-मध्यभागो येषां ते तथा। ऋजुकानां-अवक्राणां समानां आयामादिप्रमाणतः संहतानां घनानां सहजतस्तनूनां-सूक्ष्माणां कृष्णानां स्निग्धानां आदेयानां प्रशस्यानां सौभाग्यवतां वा लडहानां प्रलम्बानां सुकुमालानां-कोमलानां कमलवत् मृदुकानां रोम्णां-तनूरुहाणां राजिः-श्रेणिर्येषां ते तथा। झपविहगयोरिव-मत्स्यपक्षिणोरिव सुजातौ पीनौ कुक्षी-पार्श्वप्रदेशौ येषां ते तथा। झषवत्-मत्स्यवत् उदरं येषां ते तथा, पद्मवत् विकटा नाभिर्येषां ते इदं विशेषणं न पौनरुक्त्यं पूर्वोक्तविशेषणस्य बाहुल्येनपाठात्। सन्नतौ-अधो नमन्तौ पार्श्वौ प्रतीतौ येषां ते तथा, संगतपार्श्वा-युक्तपार्श्वा, अत एव मिलितं-सुघटितपार्श्वा, सुन्दरपार्श्वा-शोभनपार्श्वा, सुजातपार्श्वा-पार्श्वगुणोपेतत्वात्, मितौ-मानोपेतौ

१ दगठिति इति भाषा

यगनिम्मलसुजायनिरुवहयदेहधारी, कणगसिलातलपसत्थसमतल-उवइयविच्छिन्नपिहुलवच्छा, जुयसंनिभपीणरइयपीवर-पउट्ठसंठियसुसिलिट्ठविसिट्ठलट्ठसुनिचित-घणथिरसुबद्धसंधी, पुरवरवरफलिहवट्टियभुया, भुयईसरविपुलभोगआयाण-फलिउच्छूढदीहबाहू, रत्ततलोवतिय-मउयमंसलसुजायलक्खणपसत्थ-अच्छिद्दजालपाणी

मात्रिकौ प्रमाणयुक्तौ तथा मितौ दीर्घत्वेन मातृकौ-पंशुलिकादिभिः चउसट्ठि पिट्ठिकरंडया इत्यादिवचनात् पीनौ-पुष्टौ रचितौ कृतौ निर्माणनाम्ना पार्श्वौ येषां ते तथा, अथवा मितौ मातृकौ एकार्थौ शब्दौ इति अथवा तिदौ पार्श्वौ येषां ते तथा। पुनः कीदृशाः? अकरण्डुकं मांसोपचितत्वेन अविद्यमानपृष्ठिपार्श्वास्थिकिकसं यथा भवति तद्वत् तथा कनकरुचकं-स्वर्णाभरणं तद्वत् निर्मलं निरुपहतं रोगादिभिरनुपद्रुतं यत् देहं-शरीरं तं धारयंति ते तथा। कनकशिलातलमिव प्रशस्तं प्रधानं समतलं-अविषमरूपं उपचितं मांसलं विस्तीर्णं-विशालं पृथुलं गोपुरकपाटवत् वक्षो हृदयं येषां ते तथा। युगं-शकटाङ्गं तत् संनिभौ युगसदृशौ पीनौ-मांसेन पुष्टौ रतिदौ-रमणीयौ पीवरौ-महान्तौ प्रकोष्ठौ कलाचिकादेशौ तथा संस्थिता-विशेषसंस्थानवन्तः, सुश्लिष्टाः सुघटिता लष्टा-मनोज्ञाः सुष्ठु निचिता-घना निबिडाः स्थिरा निश्चलाः सुबद्धा वशांत्रादिभिः सुबद्धाः सन्धयोऽस्थिसन्धानानि येषां ते। पुरवर-फलिहनगरद्वारपरिघवद्वरार्गलावत् वत्तुलौ-वृत्तौ भुजौ-बाहू येषां ते तथा। भुजगेश्वराः-सर्पस्वामिनो शेषनागादयः तेषां यो विपुलो-महान् विस्तीर्णो यो भोगः-शरीरं कायस्तद्वत् आदेयो रम्यो यः परिघाऽर्गला उच्छूढत्ति स्वस्थानादुत्क्षिप्तो-निष्कासितस्तद्वद्दीर्घौ बाहूयेषां ते तथा। रक्तं ताम्रं तलं अधोभागो यस्मिन् तादृशौ उपचितौ-मांसेन पुष्टौ मृदुकौ-कोमलौ मांसलौ सुजातौ सुनिष्पन्नौ लक्षणानि स्वस्तिकादीनि तैः कृत्वा प्रशस्तौ शोभनौ अच्छि-

१ कलाइ भाया

पीवरसुजायकोमलवरंगुली, तंबतलिणसुइरुइलनिद्धनक्खा, निद्धपाणिलेहा, चंदपाणिलेहा, सूरपाणिलेहा, संखपाणिलेहा, चक्कपाणिलेहा, दिसासोवत्थियपाणिलेहा, रविससिसंखवरचक्कदिसासोवत्थियविभत्तसुविरइयपाणिलेहा, वरमहिस-वराह-सीह-सद्दूल-रिसह-नागवरपडिपुन्नविउलखंधा, चउरंगुलसुप्पमाणकंबुवरसरिसग्गीवा, अवट्ठियसुविभत्तचित्तमंसू, उवचियमंसलपसत्थसद्दूलविपुलहणुया, ओयवियसिलप्पवालबिंबफल-

द्रौ अविरलांगुलिसमुदायौ पाणी—हस्तौ येषां ते तथा। पीवराः—पुष्टाः सुजाताः—सुनिष्पन्नाः कोमला—मृदुला वराः—प्रधाना अङ्गुलयो येषां ते तथा। ताम्रा—अरुणाः तलिनाः—सूक्ष्माः शूचयो—निर्म्मला रुचिराः—दीप्ताः स्निग्धास्तेजस्विनो नखा येषां ते, स्निग्धा—अरूक्षाः हस्तरेखा येषां ते, चन्द्रवत् अविषमा हस्तरेखा येषां ते, सूर्यकिरणवत् झगझगायमाना पाणिरेखा येषां ते, शङ्खवत् उन्नते पाणिरेखे येषां ते, चक्रवत् वृत्ता पाणिरेखा येषां ते तथा, दिक्स्वस्तिको दक्षिणावर्त्त इत्यर्थः तद्वत् कररेखा येषां ते, रविः—सूर्यः शशी—चन्द्रः शङ्खः—कम्बुः वरं—प्रधानं चक्रं दक्षिणावर्त्तो दिग्स्वस्तिकः विभक्ताः—विरचिताः सुविरचिता—सुनिर्म्मिता पाणिरेखा येषां ते। वरा ये महिषाः—यमवाहनाः वराहाः—शूकराः सिंहाः शार्दूलाः—व्याघ्रविशेषाः ऋषभाः—वृषभाः नागाः—गजवराः प्रधानहस्तिनः तद्वत् प्रतिपूर्णो विपुलः—विस्तीर्णः स्कन्धो येषां ते तथा, चत्वार्यङ्गुलानि सुष्ठु प्रमाणं यस्याः, कम्बुवरेण च—प्रधानशङ्खेन सदृशीः उन्नतत्वावलियोगाभ्यां समाना ग्रीवा—कण्ठो येषां ते तथा, अवस्थितानि—न हीयमानानि वर्द्धमानानि सुविभक्तानि—विविक्तानि विचित्राणि च शोभयाऽद्भुतभूतानि श्मश्रूणि—कूर्चकेशा येषां ते तथा, उपचितं—मांसलं प्रशस्तं शार्दूलस्येव विपुलं हनुः—चिबुकं येषां ते तथा।

१ हडपचीति भाषा

संनिभाधरोट्ठा, पंडुरससिसकलविमल-संख-गोखीर-फेण-कुंद-दगरयमुणालिया धवलदंतसेढी, अखंडदंता, अप्फुडियदंता, अविरलदंता, सुणिद्धदंता, सुजायदंता, एतदंतसेढिव्व अणेगदंता, हुयवहनिद्धंत-धोयतत्ततवणिज्जरत्ततला, तालुजीहा, गरुलायतउज्जुतुंगनासा, अवदालियपोंडरीयनयणा, कोकासियधवलपत्तलच्छा, आणामियचावरुइल-किण्हब्भराजि-संठियसंगयाययसुजायभुमगा, अल्लीणपमाणजुत्तसवणा, सुसवणा पीणमं-

पुनः कीदृशाः ? उपचिता-मांसला शिलाप्रवालं-विद्रुमं बिम्बफलं-गोल्हाफलं तद्वत् सन्निभाः-सदृशाः अधरोष्ठा रक्तत्वेन दन्तच्छदा येषां ते, तथा पुनः कीदृशाः ? पाण्डुरं यत् शशिशकलं-चन्द्रखण्डं तद्वत् विमलं शंखवद् गोक्षीरफेनवत् कुन्दपुष्पवत् दकरजोवत् मृणालिका-पद्मिनीपत्रलग्नजलबिन्दुवत् धवला दन्तश्रेणिर्येषां ते तथा, अखण्डाः परिपूर्णाः दन्ताः येषां ते, अस्फुटिता राजिरहिता दशना येषां ते, अविरला घना दन्ता येषां ते तथा, स्निग्धदन्ता-अरूक्षदन्ता, सुजात-सुनिर्मितदन्ताः इवोत्प्रेक्ष्यते एकदन्त-श्रेणिवत् संबद्धाः अनेकदन्ता अपि द्वात्रिंशद्दशना अपि एकदन्तवत् दृश्यन्ते । पुनः कीदृशाः ? हुतं वहतीति हुतवहो-वह्निस्तेन यत् निर्ध्मूतं-धमितं तदेव मलापनयनेन धौतं क्षालितं तप्तं तापितं यत् तपनीयं सुवर्णं तद्वत् रक्ततलं लोहितरूपं तलं तादृशं तालु जिह्वा येषां ते तथा । गरुडस्येव आयता-दीर्घा ऋज्वी-सरला तुङ्गा-उन्नता नासा येषां ते तथा, अवदालितं- विकसितं यत्पुण्डरीकं-धवलकमलं तद्वत् नयने-अक्षिणी येषां ते तथा, कोकासिते प्रमुदिते धवले पत्रले-पक्ष्मणी तद्वती ईक्षणे येषां ते तथा, आ ईषत् आनामितं-वालितं यत् चापं-धनुः तद्वत् रुचिरे शोभने कृष्णा-श्यामा अभ्रराजिसंस्थिते-कृष्णाभ्रश्रेणिवत् संस्थितकालमेघलेखावत् संगते आयते सुनिष्पन्ने भ्रुवौ येषां ते तथा, अमरौ आलीनौ-स्तब्धौ प्रमाणयुक्तौ प्रेङ्खोलनवत् श्रवणौ-कर्णौ येषां ते तथा, सुष्ठु

सलकवोलदेसभागा, अचिरुग्गयबालचंदसंठियमहानिलाडा, उडुवतिरिव पडिपुन्नसोमवयणा, छत्तागारुत्तमंगदेसा, घणनिचियसुबद्धलक्खणुन्नय-कूडागारनिभपिंडियग्गसिरा, हुयवहनिद्धंतधोयतत्ततवणिज्जरत्तकेसंतकेसभूमी, सामलीपोंडघणनिचियछोडियमिउविसतपसत्थसुहुमलक्खणसुगंधिसुंदरभुयमोयगभिंगनीलकज्जल-पहट्ठभमरगणनिद्धनिगुरुंबनिचिय-कुंचियपयाहिणावत्तमुद्धसिरया, सुजातसुविभत्तसंगयंगा, लक्खणवंज-

श्रवणं-शब्दोपलम्भनं येषां ते, पीनमांसलकपोलदेशभागाः पुष्टकपोलगल्लात्परभागाः, अचिरोद्गतस्य नवचन्द्रस्य यत् संस्थानं तद्वत् महान् ललाटं भालं येषां ते अष्टमीशशिमण्डलसदृशभाला इत्यर्थः, उडुपतिश्चन्द्रस्तद्वत्परिपूर्णं सौम्यवदनं येषां ते तथा, छत्राकारोत्तमांगदेशाः-उष्णीषोन्नतत्वेन उन्नतशिरसः, घनो-लोहमुद्गरस्तद्वन्निबिडं-निचितं सुबद्धं स्नायुभिः लक्षणोन्नतं-महालक्षणं कूटं-कूटाकारनिभं-सशिखरभवनतुल्यं पिण्डिकेव वर्त्तुलत्वेन पिण्डिकायमानं अग्रशिरः शिरोग्रं येषां ते तथा। हूतवहनिर्ध्मूतधौतं तप्तं यत् तपनीयं-रक्तसुवर्णं तद्वत् रक्ता-लोहिता केसंतत्ति-केशभूमिः-मस्तकत्वग् येषां ते तथा। शाल्मलिर्वृक्षविशेषः तस्य पौण्डं-फलं घनं-निचितं-अत्यर्थं निबिडं छोटितं घट्टितं तद्वत् मृदवः-सुकुमारा विशदा-विस्पष्टाः प्रशस्ता-माङ्गल्याः सूक्ष्माः-श्लक्ष्णाः लक्षणवन्तः सुगन्धयः सद्द्रव्येण वासिता इव सद्गन्धाः, सुंदराः-शोभनाः भुजमोचको-रत्नविशेषस्तद्वत् भृङ्गः-श्यामभ्रमरः कीटकविशेषः, [2]नीलो-रत्नविशेषः, कज्जलमिव कज्जलं अञ्जनं प्रहृष्टो यो भ्रमरगणः-प्रमुदितमत्तमधुकरनिकरस्तेषां गगः-समुदयस्तद्वत्कान्तयः स्निग्धा निकुरम्बाः-समूहास्तादृशा निचिता-भृताः कुञ्चिताः-वक्राः [3]प्रदक्षिणावर्त्ताः तत्सदृशाः मूर्द्धजाः-शिरसिजाः केशा येषां ते तथा।

१ भींगोडिया इति-भाषा २ नीलक इति भाषा ३ चींटलीया इति भाषा

णगुणोववेया, पसत्थबत्तीसलक्खणधरा, हंसस्सरा, कुंचस्सरा, दुंदुभिस्सरा, सीहस्सरा, उज्ज(ओघ)सरा, मेघसरा, सुस्सरा, सुसरनिग्घोसा, वज्जरिसहनारायसंघयणा, समचउरंससंठाणसंठिया, छायाउज्जोवियंगमंगा छवी [पसत्थच्छवी] निरातंका, कंकग्गहणी, कवोतपविसपरिणामा, सउणिपोसपिट्ठंतरोरुपरिणया, पउमुप्पलसरिसगंधुस्सा-

सुजात-सुविभक्तसङ्गताङ्गाः । लक्षणव्यञ्जनगुणोपपेताः द्वात्रिंशल्लक्षणधराः, हंसस्येव स्वरः-शब्दो येषां ते तथा स्निग्धत्वात्, क्रौञ्चस्येव स्वराः-सूक्ष्ममृदुत्वात्, दुन्दुभिवत्-स्वरा गम्भीरत्वात्, सिंहस्वरा-निरन्तरतादृग्भावशब्दा न तु खरवत् हीनशब्दाः । ओघस्वरा अत्रुटिताः शब्दाः, मेघवत्स्वराः, सुस्वराः कर्णयोः सुखत्वात् सुस्वरो आदेयः निर्घोषः शब्दो येषां ते तथा, वज्रर्षभनाराचसंहननं अस्थिनिचयो येषां ते तथा । तत्र "[1]रिषहो उ होइ पट्टो वज्जं पुण कीलिया वियाणाहि, उभओ मक्कडबंधो नारायं तं वियाणाहि ॥१॥ समचतुरस्रसंस्थानसंस्थिताः तत्र उर्ध्व अधःकाययोः अंसजान्वोर्दक्षिणतो वामतो वामतो वा दक्षिणे, पर्यस्तिका निलाडभागे समत्वं चतुरस्रमुच्यते, छायया-कान्त्या उद्योतितांङ्गोपाङ्गाः, छवित्ति-प्रशस्तत्वचः, निरातङ्काः-नीरोगाः, कङ्कस्य-पक्षिविशेषस्येव आहारग्रहणं येषां ते अल्पाहारेण सन्तुष्टा इत्यर्थः । कपोतानां-पक्षिविशेषाणां [3]परिणामो इति प्रतिश्रुतिर्येषां ते साशंका एव वर्त्तन्ते मन्दकषायत्वात्, शकुनिः-पक्षिणीरिव तस्याः पोसंति-आपनमार्गं तद्वत् पुरीषोत्सर्गे निर्लेपा इत्यर्थः, पृष्टं अन्तरं पार्श्वदेशं उरू च जङ्घास्तेषु परिणताः-परिपक्वा इत्यर्थः । पद्मं-कमलं उत्पलं-नीलोत्पलं तत्सदृशो गन्धो यस्य स तथा तेन श्वासेन सुरभि-सुगन्धि वदनं

१ ऋषभस्तु भवति पट्टो वज्रं पुनः किलिकां विजानाहि । उभयतो मर्कटबन्धो नाराचं तद् विजानीहि ॥१॥ २ ०स्येव ग्रहणी गुदाशयो नीरोगवर्चस्कतया येषां ते तथा अथवा ३ अहार परिणति येषां ते तथा कपोतानां हि पाषाणा अपि जीर्यन्ति.

ससुरभिवयणा, अणुलोमवाउवेगा, अवदायनिद्धकाला, विग्गहियउन्नयकुच्छी, अमयरसफलाहारा, तिगाउयसमूसिया, तिपलिओवमट्ठितीका, तिन्नि य पलिओवमाइं परमाउं पालयित्ता. तेवि उवणमंनि मरणधम्मं अवितित्ता कामाणं।

पमयावि य तेसिं होंति सोम्मा सुजायसव्वंगसुंदरीओ पहाणमहिलागुणेहिं जुत्ता, अतिकंतविसप्पमाणमउयसुकुमालकुम्मसंठियविसिट्ठचलणा, उज्जुमउयपीवरसुसाहतंगुलीओ, अब्भुन्नतरतिततलिणतंबसुइनिद्धनखा,

---

येषां ते तथा। अनुलोमो–अनुकूलो मनोज्ञ इत्यर्थः वायुवेगः शरीरसमीरणजवो येषां ते तथा, अवदाता–गौराः स्निग्धकेशा श्याममूर्द्धजाः विग्रहं–शरीरं तस्यानुरूपौ विग्रहिकौ उन्नतौ तुङ्गौ पीनौ कुक्षी उदरदेशौ येषां ते तथा, अमृतस्येव रसो येषां ते तानि फलान्याहारो येषां ते तथा, त्रिगव्यूतसमुच्छ्रिता तथा ता उन्नताः, त्रिपल्योपमस्थितिकाः–त्रिणि पल्योपमानि परमं आयुर्जीवितं पालयित्वा एतादृशाः युगलिकनराः, ते अपि समुच्चयार्थे प्राप्नुवन्ति मरणधर्मं, अतृप्ताः कामानां।

प्रमदा अपि–स्त्रियोऽपि तेषां भवन्ति ता अपि कीदृश्यः यानि विशेषणानि वज्रऋषभनाराचसंघयणादीनि तान्यपि तथैव परं तासु श्यामासु स्त्रीषु याः सर्वाङ्गसौन्दर्यभाजः, प्रधानमहिलागुणैर्युक्ताश्चतुःषष्टिकलादिभिर्वा हावभावविलासविभ्रमादिभिः

लीला–विलासो विच्छित्तिर्बिब्बोकः किल किंचितं। मोट्टायितं कुट्टमितं ललितं विहृतं तथा ॥१॥ विभ्रमश्चेत्यलङ्काराः स्त्रीणां स्वाभाविका दश इत्यादि ग्रन्थान्तराद् ज्ञेयाः। अतिक्रान्तौ–अतिरमणीयौ विशिष्टस्वप्रमाणौ अथवा विसर्पन्तौ संचरन्तौ–मृदूनां वस्तूनां मध्ये अपि अतिसुकुमालौ कूर्म्मवत् उन्नतत्वेन संस्थितौ विशिष्टौ मनोज्ञौ चलनौ पादौ यासां ताः तथा।

रोमरहियवट्टसंठियअजहन्नपसत्थलक्खण-अकोप्पजंघजुयला, सुणिम्मितसुनिगूढजाणू-मंसलपसत्थसुबद्धसंधी, कयलीखंभातिरेकसंठिय-निव्वणसुकुमालमउयकोमल-अविरलसमसहितसुजायवट्टमाणपीवरनिरन्तरोरू अट्ठावयवीइपट्टसंठियपसत्थविच्छिन्नपिहुलसोणी, वयणायामप्पमाणदुगुणिय-विसालमंसलसुबद्धजहणवरधारिणीओ, वज्जविराइयपसत्थलक्खणनिरोदरीओ, तिवलिवलियतणुनमियमज्झियाओ, उज्जुयसमसहिय-जच्च-

ऋजवः-सरलाः मृदुकाः-कोमलाः पीवराः-पुष्टाः अविरलाः-घनाः सुसंहता-अङ्गुलयः पादाङ्गुलयो यासां ताः तथा, अभिण्याप्य उन्नता रतिदाः-सुखदा रचिता वा तलिनाः-प्रतलाः ताम्रा-आरक्ताः, शूचयः-पवित्राः, स्निग्धाः नखाः अङ्गुलीषु यासां ताः। तथा रोमरहितं छत्रवत् संस्थितं उन्नतं वर्त्तुलं अजघन्यं एतावता उत्तमं-प्रशस्तं लक्षणप्रधानमाङ्गल्यचिन्हं यस्मिन् तत्। अकोप्यं-अद्वेष्यं दृश्यजनानां रमणीयजङ्घायुगलं उरुद्वयं यासां तास्तथा। सुनिर्मितौ-सुन्यस्तौ निगूढौ-गुप्तौ जान्वौ मांसलौ-मांसोपचितौ प्रशस्तौ सुबद्धौ स्नायुभिः सन्धी-सन्धाने यासां तास्तथा। कदलीस्तम्भादपि अतिरेकेण-अतिशयेन संस्थिते-सम्यक्तया स्थिते-स्थापिते निर्व्रणे-व्रणरहिते अच्छिद्रे सुकुमालमृदुकोमले अत्यर्थं अविरले-परस्परं मिलिते समे-प्रमाणसहिते तुल्ये वर्त्तुले-गोपुच्छाकारवत् वृत्तानुपूर्वे पीवरे निरन्तरे निर्विशेषे उरू उपरितनजङ्घे यासां तास्तथा। अष्टापदस्य-द्युतविशेषस्य वीचयस्तरङ्गाः पाशका-कर्षणहर्षाऽतिरेकी रेखा तत्प्रधानं यत्फलकं-पट्टकं तत् संस्थिता प्रशस्ता विस्तीर्णा श्रोणिः-कटी यासां तास्तथा। वदनायामप्रमाणस्य मुखदीर्घत्वस्य यत्प्रमाणं ततो द्विगुणितं चतुर्विंशत्यङ्गुलमित्यर्थः, विशालं विस्तीर्णं मांसलं-सुबद्धं उपचितं श्लक्ष्णं यत् जघनं कटेरग्रभागस्तं धारयंति ताः। वज्रमध्यवत् विराजितं-शोभमानं प्रशस्तं लक्षणं निरुदरं-क्षामं उदरं यासां तास्ताः, तिसृभिर्व-

तणुकसिणनिद्ध-आदेज्जलडहसुकुमालमउयसुविभत्तरोमराजीओ, गंगावत्तगपदाहिणावत्ततरंगभंग-रविकि-
रणतरुणबोधितआकोसायंत-पउमगंभीरविगडनाभा, अणुब्भडपसत्थसुजातपीणकुच्छी, सन्नतपासा, सुजात-
पासा, संगतपासा, मियमाइयपीणरतितपासा, अकरंडुयकणगरुयग-निम्मलसुजायनिरुवहयगायलट्ठी, कंचण-
कलसपमाणसमसहियलट्ठ-चुचूयआमेलगजमलजुयलवट्टिय-पओहराओ भुयंगअणुपुव्वतणुयगोपुच्छवट्ट-सम-

---

लिभिर्विलसितं तनुकं-कृशं नमितं तं मध्यं-मध्यभागो यासां ताः, ऋजुकानां-अवक्राणां समानां-तुल्यानां [संहितानां अविरलानां]
जात्यानां-स्वभावजानां तनूनां-सूक्ष्माणां कृष्णानां-कालानां स्निग्धानां-कान्तानां आदेयानां-श्लाघ्यानां रम्याणां लडहडानां ललि-
तानां सुकुमालानां--मृदूनां कोमलानां सुविभक्तानां यथास्थानशोभितानां रोम्णां राजिः पद्धतिर्यासां तास्तथा । गङ्गावर्तदक्षिणावर्तत-
रङ्गभङ्गा यासां तास्तथा तादृश्यः ? पुनः कीदृश्यः ? रविकिरणैस्तरुणं नवीनं बोधितं विकाशीकृतं आकोशायितं [विमुकुलीभूतं] अकु-
शलीभूतं यत् पद्मं तद्वत् गम्भीरा-विकटा नाभिर्यासां ताः । अनुद्भटावनुल्बणौ-अचटतुल्यौ प्रशस्तौ-सुजातौ पीनौ-उपचितौ कुक्षी यासां
तास्तथा सन्नतपार्श्वाः, सुजातपार्श्वाः, संगतपार्श्वाः सर्वाणि विशेषणानि पूर्वव्याख्यातानि, सामितौ अर्द्धनामितौ मात्राप्रमाणोपेतौ रतिदौ
पीनौ पार्श्वौ यासां ताः, अथवा साम्यं इतौ सामितौ अत एव मात्राप्रमाणोपेतौ अकरण्डुकं-स्वभावतो निर्मलं-धौतं यत् कनकं तस्य रुचक
आभरणविशेषः, तद्वत् निर्मला-रजोरहिता सुजाता-सुनिर्म्मिता निरुपहता रोगादिभिरनुपहता काया शरीरस्य लष्टिः-गात्रविशेषा यासां
ताः । काञ्चनस्य ये कलशा-कुम्भास्तद्वद् प्रमाणावृत्तत्वेनोन्नताः समाः तुल्यास्तेषु संहितं-युक्तं लष्टं-प्रधानं यत् चुचुकं स्तनबिटकं
यस्मिन् तादृशं[तादृशौ] आमेलकौ-स्तनशिखरे मेलकौ यमलयुगलौ युग्मजाताविव युगलौ वृत्तौ-वर्त्तुलौ वर्द्धितौ पयोधरौ स्तनौ यासां

सद्दियनमियआदेज्जलडहबाहा, तंबनहा, मंसलग्गहत्था, कोमलपीवरवरंगुलीया, निद्धपाणिलेहा, ससिसूरसंख-चक्कवरसोत्थियविभत्तसुविरइयपाणिलेहा, पीणुण्णयकक्खवत्थिप्पदेस-पडिपुन्नगलकवोला, चउरंगुलसुप्पमाण-कंबुवरसरिसगीवा, मंसलसंठियपसत्थहणुया, दालिमपुप्फप्पगासपीवरपलंबकुंचितवराधरा, सुंदरोत्तरोट्ठा, द-धिदगरयकुंदचंदवासंतिमउल-अच्छिद्दविमलदसणा, रत्तुप्पलपउमपत्तसुकुमालतालुजीहा, कणवीरमुउलऽकुडि-

ताः। भुजंगवत्-नागवत् आनुपूर्व्येण-क्रमेण सूक्ष्मौ गोपुच्छवद्वृत्तौ समौ-तुल्यौ मध्यकायापेक्षया विरलौ नमितौ-नम्रौ आदेयौ-सुभगौ लडहौ-ललितौ बाहू-भुजौ यासां तास्तथा। ताम्रनखाः रक्तकरजाः यासां ताः, मांसलाग्रहस्ताः, कोमलपीवरवराङ्गुलीकाः, स्निग्धकरेखाः, शशिसूर्यशङ्खचक्रप्रधानस्वस्तिकविभक्त-सुरचितपाणिरेखाः-सर्वेषामाकारभावत्वात्, पीनोन्नते कक्षे-भुजमूले बस्तिप्रदेशश्च यासां ताः, वस्तिप्रदेशश्च गुह्यप्रदेशमपि पीनोन्नतमिति शेषः, प्रतिपूर्णकपोलाः-गोलकपोला गल्लात्परभागो यासां ताः। चतुरङ्गुलसुप्रमाणाः वरकम्बुवत् प्रधानशङ्खवत् ग्रीवा कन्धरा यासां ताः। मांसला-उपचिता संस्थिता-स्थिरा प्रशस्ता हनुका-चिबुका यासां ताः। दाडिमविकसितपुष्पप्रकाशो रक्तपुष्पसन्निभा पीवरा-पुष्टा इषत् लम्ब्यमानः उन्नतत्वेन अग्रे प्रतलः कुञ्चितो नम्रत्वेन ईषन्नमितो वरः-प्रधानो अधरो-अधस्तनो दन्तच्छदो यासां ताः। सुन्दरः उत्तर उपरितन ओष्ठो दन्तवसनं यासां ताः, दधिसितमितं दुग्धं दकरजः पत्रस्थितजलबिन्दवो वा दकं जलं रजतं रूप्यं कुन्दः-पुष्पविशेषः चन्द्रः-शशी वासन्तिका-वनस्पतिवल्लीविशेषस्तस्य मुकुलं-कोरकं तद्वत् अच्छिद्रा-अविरला निर्मलाः दशना-दन्ता यासां ताः। रक्तोत्पलपद्मपत्रवत् सुकुमालः तालु ककुदं जिह्वा-रसना यासां ताः। करवीर-कुड्मलवत् अकुटिला-अवक्रा अन्तः अभ्युन्नता उत्तरोत्तरभागेन ऋज्जुकाः सरला तुङ्गा उन्नता नासा यासां ताः,

लऽभुन्नयउज्जुतुंगनासा, सारदनवकमलकुमुत-कुवलयदलनिगरसरिसलक्खणपसत्थ-अजिम्हकंतनयणा, आनामियचावरुइलकिण्हब्भराइसंगय- सुजायतणुकसिणनिद्धभुमगा, अल्लीणपमाणजुत्तसवणा, सुस्सवणा, पीणमट्ठगंडलेहा, चउरंगुलविसालसमनिलाडा, कोमुदिरयणिकरविमलपडिपुन्नसोमवदणा, छत्तुन्नयउत्तमंगा, अकविलसुसिणिद्धदीहसिरया, छत्त-ज्झय-जूव-थूभ-दामिणि-कमंडलु-कलस-वावि-सोत्थिय-पडाग-जव-मच्छ-कुम्म-रथ-वरमकर-ज्झय-अंक-थाल-अंकुस-अट्ठावय-सुपइट्ठ-अमर-सिरियाभिसेय-तोरण-मेइणि-उद-

यथा-नासा तथाऽऽर्जवमिति वचनात्। शरदि भवं शारदं यन्नवं कमलं सूर्यविकाशि कुमुदं चन्द्रबोधि कुवलयं-नीलोत्पलं एतेषां यो दलनिकरः पत्रसमुदायस्तत् सदृशैः? पुनः किंलक्षणैः प्रशस्ते अजिह्मे अकुटिले-अमन्दे निर्मले रम्ये नयने-लोचने यासां तास्तथा। आनामितं यत् चापो-धनुः तद्वत् रुचिरे कृष्णाभ्रराज्या सह संगते अनुगते, सुजाते तन्वी कृष्णे-श्यामे स्निग्धे[1] भ्रुवौ यासां तास्तथा। आलीनप्रमाणयुक्तश्रवणाः पूर्ववत् शोभनश्रवणं शब्दग्रहणं यासां ताः, पीनाः-पुष्टाः शुद्धा[2] गण्डरेखा यासां तास्तथा। चतुरङ्गुलप्रमाणं विस्तीर्णं सममविषमं निलाटं ललाटं यासां ताः। कौमुदी-कार्त्तिकी चन्द्रगोलिकायुक्तो यो रजनिकरश्चन्द्रस्तद्वत् निर्मलं मलरहितं प्रतिपूर्णवर्त्तुलं सौम्यं दृश्यजनाह्लादकत्वेन वदनं मुखं यासां तास्तथा। छत्रोन्नतवत् उत्तमाङ्ग-मस्तकं यासां तास्तथा, अकपिलाः कपिलाः पिंगला न, सुस्निग्धाः दीर्घाः शिरोजाः-केशा येषां ते तथा। छत्रं १ ध्वजः २ यूपो यज्ञस्तम्भः ३ स्तूपः ४ दामिनीति रूढिगम्यं ५ कमण्डलुः ६ कलशः ७ वापी ८ स्वस्तिकः ९ पताका १० यवो ११ मत्स्यः १२ कूर्मः-कच्छपः १३ प्रधानरथः १४ मक-

१ स्नेहालां भापा २ शुभ इति भापा

धिवर-पवरभवण गिरिवर-वरायंससललियगय-उसभ-सीह-चामर-पसत्थबत्तीसलक्खणधरीओ, हंससरित्थ-गतीओ, कोइलमहुरगिराओ, कंता, सव्वस्स अणुमयाओ, ववगयवलिपलितवंगदुव्वन्न-वाधिदोहग्गसोयमुक्काओ, उच्चत्तेण य नराण थोवूणमूसियाओ, सिंगारागारचारुवेसाओ, सुंदरथणजहणवयणकरचरणणयणा, लावन्नरुव-जोव्वणगुणोववेया, नंदणवणविवरचारिणीओ व्व अच्छराओ उत्तरकुरुमाणुसच्छराओ अच्छेरगपेच्छणिज्जि-

रध्वजः-कामदेवः १५ वज्रं-अंको रूढिगम्यः १६ स्थालः १७ अङ्कुशः १८ अष्टापदो द्यूतफलकं १९ सुप्रतिष्टकं-स्थापनकं २० अमरो-देवः २१ मयूरः २२ श्रिया अभिषेको लक्ष्म्यभिषेकः २३ तोरणं २४ मेदिनी-पृथ्वी २५ उदधिः-समुद्रः २६ प्रवरं प्रधानं भवनं २७ गिरिवरोऽद्रिः २८ वर आदर्शो दर्पणः २९ सुललितो-लीलावान् यो गजः वृषभः ३० सिंहः ३१ चामरः ३२ एतानि द्वात्रिं-शन्मितानि प्रशस्तानि लक्षणानि धारयन्ति ताः। हंससदृशा गतिर्यासां तास्तथा, कोकिलवत् मधुरा मिष्टा गिरो यासां ताः, कान्ताः कमनीयाः, सर्वस्य जनस्य अनुमता अभिमताः, व्यपगता-नष्टावली त्वग् शेषरूपा, पलितं-केशधवलिमत्वं व्यङ्गं-अङ्गहीनता दुर्वर्ण्यं शरीरम्लानता, व्याधिः शरीरव्यथादौर्भाग्यं, शोकं गतवस्तुखेदः तै रहिता मुक्ता यासां ताः। उच्चत्वेन नराणां-पुरुषाणां स्तोकोनमुच्छ्रिताः किञ्चित् न्यूनत्रिगव्युतोच्छ्रिता इत्यर्थः, संघयणं संठाणं उच्चत्तं कुलगरेहिं सममिति वचनात्। शृङ्गारस्य रसविशेषस्य आगार-मिव आगारं-गृहं तद्वच्चारुवेषा-रम्यनेपथ्याः, तथा सुन्दराणि शोभनानि प्रशस्तानि सुन्दराणि स्तन-जघन-वदन-कर-चरण-नय-नानि यासां तास्तथा, तथा वचनेन लावण्येन रूपेणाकारविशेषेण-नवयौवनेन गुणैरौदार्यादिभिस्तैः उपेता-युक्ता यास्ताः। नन्दनवन-

१ लीलरिया इति भाषा

याओ तिन्नि य पलिओवमाइं परमाउं पालयित्ता ताओऽवि उवणमंति मरणधम्मं अवितित्ता कामाणं (सू० १५)

मेहुणसन्नासंपगिद्धा य मोहभरिया सत्थेहिं हणंति एक्कमेक्कं विसयविस उंदारपरदारेहिं, हम्मंति विसुणिया धणनासं सयणविप्पणासं च पाउणंति, परस्स दाराओ जे अविरया मेहुणसन्नसंपगिद्धा य मोह-

विवरचारिण्य इव अप्सरसो–देव्यस्तत्र नन्दनवनं मेरोर्द्वितीयवनं तत्र क्रीडनशीलाया अप्सरसस्तद्वत्, उत्तरकुरुषु मनुष्यरूपा अप्सरसः, आश्चर्यमिव अद्भुतमिति प्रेक्षतया अवलोकमानाः सन्त्यः सर्वेषामाश्चर्यकर्त्र्यः, त्रीणि पल्योपमान्यायुः परमं परिपाल्य, तादृशः अपि मरणधर्मं प्राप्नुवन्ति यतः—

तिर्यंचो मानवाः देवाः, केचित् कान्तानुचिन्तनं । मरणेऽपि न मुञ्चन्ति सद्योगं योगिनो यथा ॥१॥

अतृप्ताः सन्तः कामभोगानामिति एतावता ग्रन्थेन अब्रह्मकारिणो दर्शिताः, अथ यथा क्रियते कृतं सत् यत्फलं ददाति इति द्वार-द्वयं दर्शयन्नाह–

मैथुनसंज्ञायां संप्रगृद्धाः सन्तः कामरागापद्रुता मोहभृताः अज्ञानपूरिताः शस्त्रैः कृत्वा घ्नन्ति, एकमेकंति परस्परेण विषयविषध-नवशात् तथा विषयाः–शब्दादयस्तदेव विषं तद्वशात् उदाराः–उत्कटाः परकीयदारान् प्रति प्रवृत्ताः हिंस्रन्ति–हन्यन्ते विशेषेण श्रुता-विज्ञातास्संतो धननाशं स्वजननाशं प्राप्नुवन्ति स्वयं, तथा राज्ञः सकाशात् अन्येषामपि कुर्वन्ति, ये परदारेभ्यो अविरता–अविरमण-शीलाः मैथुनसंज्ञासंप्रगृद्धाः सन्तः मोहभृताश्च । अश्वाः, गजाः, गावो, महिष्यः, मृगाश्च मारयन्ति परस्परं एक्कमेक्कं अन्योऽन्यं मनुज-

१ उदीरएसु, अवरे परदारेहिं क० प्रतौ

भरिया अस्सा हत्थी गवा य महिसा मिगा य मारेंति एक्कमेक्कं, मणुयगणा वानरा य पक्खी य विरुज्झंति, मित्ताणि खिप्पं भवंति सत्तू समये धम्मे गणे य भिंदंति पारदारी, धम्मगुणरया य बंभयारी खणेण उल्लोट्टए चरित्ताओ जसमन्तो सुव्वया य पावेंति अयसकित्तिं रोगत्ता वाहिया पवड्ढिंति रोयवाही, दुवे य लोया दुआ-

गणाः-मानवाः, वानराः-मर्कटाः, पक्षिणश्च विरुद्धा भवन्ति, मित्राण्यपि क्षिप्रं-शिघ्रं शत्रूभवन्ति यतः-

सन्तापफलयुक्तस्य, नृणां प्रेमवतामपि। बद्धमूलस्य मूलं हि, महद्वैरतरोः स्त्रियः ॥१॥

समयान्-आगमार्थान् धर्मान्-समाचारान् गणान् एकसमाचारजनसमूहान् गुणान् उदारादीन् घ्नन्ति परस्त्रीसक्ता जनाः यतः-

धर्मं शीलं कुलाचारं शौर्यं स्नेहं च मानवः। तावदेव ह्यपेक्षन्ते यावन्न स्त्रीवशो भवेत् ॥१॥

पुनर्ये धर्मगुणरताः-धर्मप्रधानगुणाः ब्रह्मचारिणः क्षणेन-मुहूर्त्तेन उल्लोट्यन्ति अपवर्त्तन्ते चारित्रात्-संयमात् मैथुनसंज्ञापरिवर्द्धिताः सन्त इति योज्यते यतः-

श्लथसद्भावना धर्म्मा, स्त्रीविलासशिलीमुखैः। मुनिर्योद्धो हतोऽधस्तान्निपतेच्छीलकुञ्जरात् ॥१॥

येऽपि यशस्विनः कीर्त्तिमन्तः सुव्रताः सदाचारास्तेऽपि प्राप्नुवन्ति, अयशः-सर्वत्राऽपभ्राजनां अकीर्त्तिं-कुलजात्यादिहीलनां यतः-

अकीर्त्तिकारणं योषित्, योषिद्वैरस्य कारणं। संसारकारणं योषित्, योषितं वर्ज्जयेत् नरः ॥१॥

क्वचिदयशःकीर्त्तिमिति पाठस्तत्र 'सर्वदिग्गामुकं यशः एक दिग्गामिनी कीर्त्तिः इति विशेषः

रोगार्त्ता ज्वरादिपीडिताश्च कुष्टाद्यभिभूता वृद्धिं नयन्ति रोगव्याधीन् परदाराऽविरताः इति सम्बन्धः। यदाह-

राहगा भवंति—इहलोए चेव परलोए परस्स दाराओ जे अविरया, तहेव केइ परस्स दारं गवेसमाणा गहिया य हया य बद्धरुद्धा य एवं जाव गच्छंति विपुलमोहाभिभूयसन्ना।

मेहुणमूलं च सुव्वए तत्थ तत्थ वत्तपुव्वा संगामा जणक्खयकरा सीयाए दोवईए कए रुप्पिणीए पउमाव-

---

वर्जयेद्द्विदलं शूली, कुष्ठी मांसं ज्वरी घृतं। द्रवद्रव्यमतिसारी नेत्ररोगी च मैथुनम् ॥१॥

तथा—व्रणैः श्वयथुरायासात् स च रोगश्च जागरात्। तौ च रुक्तं[भङ्गो]दिवास्वापात्, ते च मृत्युश्च मैथुनात् ॥२॥

तेन मैथुने द्वावपि लोकौ जन्मनी दुराराधौ भवतः। इहलोकश्च परलोकश्च केषां परदारेभ्यो येऽविरताः—अनिवृत्ताः

यतः—परदाराऽनिवृत्तानामिहाऽकीर्त्तिर्विडम्बना। परत्र दुर्गतिप्राप्तिर्दौर्भाग्यं षण्ढता तथा ॥१॥

तथा केचित् परदारान् गवेषयन्तः सन्तः गृहिताश्च हताश्च बद्धा रुद्धाश्च एवं यावत् अधो गच्छन्ति नरास्तावत् इत्येतत् तृतीया-ध्ययनस्य प्रयोगा[1] वाच्याः। किम्भूतास्सन्तो विपुलेन—विस्तीर्णेन मोहेन अभिभूतास्सन्तः संज्ञा संज्ञानं येषां ते तथा, मैथुनं मूलं यत्र विद्यते तन्मैथुनमूलं क्रियाविशेषणं च पुनरर्थे, श्रूयन्ते आकर्ण्यन्ते तेषु शास्त्रेषु वृत्ता—जाताः पूर्वकाले संग्रामा—युद्धाः बहुजनक्षयकरा राम-रावणादीनां। किमर्थं ते जाताः? सीतायाः निमित्तं एवं सीतानिमित्तसंग्रामो जातः, तत्र सीतानिमित्तं यथा—

मिथिलानगरीनृपतिजनकाभिधानराज्ञो भार्या विदेहा तस्या दुहिता भामण्डलस्य सहजा जानकी सीता नाम्नी भामण्डलस्य भगिनी, विद्याधरोपनीत—देवताधिष्ठितं धनुः स्वयंवरमण्डपे स्थापितं, यो धनुश्चटापयति तं वृणोमि इति प्रतिज्ञापरा सीता नानाखचरना-

---

१ ग्रन्थो वाच्यः क० प्रतौ

किंनिकरसमक्षं अयोध्यानगरीनिवासिदशरथनृपतिसुतेन रामदेवेन–पद्मापरनाम्ना बलदेवेन लक्ष्मणाभिधानवासुदेवज्येष्ठभ्रात्रा स्वप्रभावेनोपशान्ताऽधिष्ठातृदैवतं धनुः आरोपितगुणं कृत्वा प्राप्तसाधुवादेन महाबलेन परिणीता, अनुक्रमेण दशरथराज्ञि प्रव्रजिते [प्रविव्रजिषौ] रामाय राज्यदानार्थमभ्युत्थिते च भरताभिधानाऽनुजमात्रा कैकय्या विमात्राऽऽमन्त्र्य पूर्वप्रतिपन्नवरयाचनोपायेन राज्यं भरताय दत्तवत्या पितृवचनसत्यापनार्थं राज्ये भरतेऽङ्गीकुर्वति वनवासमुपाश्रितेन सलक्ष्मणेन रामेण सह वनवासमधिष्ठिता, ततश्च क्रमेण लक्ष्मणेन कौतुकेन दण्डकारण्यं गच्छता आकाशस्थं खड्गरत्नमादाय कौतुहलेनैव वंशजालीच्छेदकृते तन्मध्यवर्त्तिनं विद्यासाधनपरायणं रावणभागिनेयं खरदूषणचन्द्रनखासुतं शम्बुकाभिधानं विद्याधरं छेद्यमानं दृष्ट्वा च तं पश्चात्तापमुपगतेन लक्ष्मणेनाऽऽगत्य भ्रातुर्निवेदितेऽस्मिन् व्यतिकरे पश्चादेतद्व्यतिकरदर्शनकुपितायां आगतायां चन्द्रनखायां तथा रामलक्ष्मणयोः रूपदर्शनात् सञ्जातकामायां तत्प्रार्थनापरायां तन्निराकृतायां अनिष्टायां च पुत्रमरणादिव्यतिकरे तया शोकरोषाभ्यां खरदूषणस्य निवेदनं कृतं, तेन वैरनिर्यातनोद्यतेन लक्ष्मणेन सह युद्धमारब्धं, ज्ञातभागिनेयमरणादिव्यतिकरेण लंकापुरीशेन आकाशेन आगच्छता रावणेन दृष्ट्वा च तामत्यन्तरूपवतीं सीतां कुसुमसायकप्रसरावेशविधुरितान्तष्करणेन अगणितकुलमालिन्येन अपहस्तितविवेकरत्नेन मुक्तशीलादिधर्मसंज्ञेन त्यक्तपरलोकभयचिन्तनेन जातसीतापहारबुद्धिना विद्यानुभावोपलब्धरामलक्ष्मणस्वरूपेण विज्ञातमुक्तसिंहनादसंकेतकरणेन लक्ष्मणसंग्रामकरणस्थानके गत्वा मुक्ते सिंहनादे च श्रुते च चिन्तामापन्ने तदभिमुखे रामे गते पश्चाद् मृगमायां विधाय दानमिषादेकाकिनी सीताऽपहृता, जटायुपक्षिणा सह युद्धं विधाय तत्पक्षौ छेदं कृत्वा, झगिति लङ्कायां नीता, विमुक्ता स्वगृहवाटिकायां, प्रार्थिता च दशकन्धरेणाऽनुकूलप्रतिकूलवाग्भिर्बहुशो न च तमिष्टवती, पश्चाद्रत्नजटीखेचरमुखादवगत्य हनुमता तत्स्थानक्षेमप्रवृत्तिं निशम्य सुग्रीवभामण्डलहनुमदादिविद्याधरवृन्दसहायेन

लक्ष्मणसनाथेन रामेण समुद्रोल्लंघनपद्याबन्धाद्युपक्रमं विधाय महारणविमर्दं विधाय च नानाविधनरेश्वरान् निहत्य दशवदनं विनिपात्य स्ववाग्प्रतिलम्भिनं तद्भ्रातरं बिभीषणं संस्थाप्य लङ्कां स्वाज्ञावशवर्त्तिनीं निर्वर्त्य सीता स्वगृहमानीतेति। तदर्थं रणो जातः इति दर्शितं सीतास्वरूपं लेशतः ॥

तथा द्रौपद्या कृते संग्रामोऽभवत् तथाहि—काम्पिल्यपुरे द्रुपदो नाम पार्थिवोऽभूत्, चुलनी भार्या, तयोः पुत्री द्रौपदी, धृष्टार्जुनस्य च कनिष्ठा स्वसा, सा चाऽन्यदा स्वयंवरमण्डपविधिना हस्तिनागपुरेशपाण्डुराजपुत्रैर्युधिष्ठिरार्जुनभीमनकुलसहदेवाख्यैः पञ्चभिः पूर्वं विपयाशयैः कृततपःप्रभावतः परिणीता। अन्यदा च पाण्डुराजस्य कुन्तीभार्यया पाण्डुपुत्रैर्द्रौपद्या च परिवृतस्य सदसि नारदर्षिर्गगनादुत्तीर्णवान् जातः, अभ्युत्थितश्च पाण्डुराज्ञा सपरिवारेण, द्रौपद्या च सुश्राविकात्वेन कुलिङ्गी मिथ्यादृष्टिः मुनिरयमिति ज्ञात्वा नाऽभ्युत्थितः। ततस्तामुपरि प्रद्विष्टवान् जातः। पश्चादसावन्यदा धातकीखण्डपूर्वभरते अमरकङ्काभिधानराजधान्यां पद्मनाभस्य नृपस्य सभायां गतस्तेन च कृताऽभ्युत्थानादिप्रतिपत्तिकः सन् पृष्टः किमस्त्यन्यस्याऽपि नृपस्य मत्सदृशान्तःपुरनारीजनः? पुनः सामर्षः ऋषिरुवाच द्रौपद्या पादाङ्गुष्ठस्य समानो न रम्यतया तवाऽयमवरोधः इति श्रुत्वा तस्यां जाताऽनुरागोऽसौ पूर्वसाङ्गतिकदेवसाहाय्यात् सुप्तां तामपहृत्य तदुद्याने प्रस्थापितवान्, साऽपि तं प्रार्थनपरं दृष्ट्वा पालय मां षण्मासान् यावदिति प्रतिपाद्य षष्ठभक्तैराचाम्लपारणकैरात्मानं भावयन्ती स्थितवती, ततो हस्तिनागपुरात् द्वारवत्यामायातया पाण्डवमात्रा कुन्त्या कृष्णाय निवेदिते तदपहारे कृष्णेनाऽपि तदवसरसमागतनारदसामर्षवचः सकाशात् पद्मनाभमन्दिरे तत्सदृशी च दृष्टैव मया द्रौपदीति किंवदन्तीमुपलभ्य सज्जीभूय वेलाकूलमागत्य लवणोदधिपतिं सुस्थितदेवमष्टमभक्तेनाराध्य कृष्णस्तेन वितीर्णमार्गः समुद्रमध्ये सरथैः पञ्चपाण्डवैः साकममरकङ्काराजधान्या बहिरु-

याने जगाम दारुकसारथिप्रेषणेन पद्मनाभं सदर्पमभिषेणयत्, सोपि सबलो योध्धुं निर्जगाम पाण्डवेषु तेन महायुद्धेन निर्मथितमानेषु कृष्णः स्वयं युद्धाय तेन सहोपतस्थौ, ततः केशवः पाञ्चजन्यशङ्खनादेन तत्सैन्यत्रिभागान्निर्मथितवान् , त्रिभागं च शार्ङ्गगाण्डीवदण्डप्रत्यंचाटङ्कारेण त्रिभागावशेषवले च पद्मनाभे प्राणभयात् नगरीप्रविष्टे कृतनरसिंहरूपेण जनार्दनेन पाददर्दरकरणेन संभग्नप्राकारगोपुराट्टालकध्वस्तभवनशिखरा राजधानी कृता, भयभीतेन तेन चाऽऽगत्य प्रणम्य च द्रौपदी तस्य समर्पिता, स च तां पाण्डवाय समर्पितवान् तैः सहैव स्वक्षेत्रमाजगाम इति कथालेशः, विस्तरस्तु तच्चरित्रादवसेयः।

तथा रुक्मिण्याः कृते संग्रामोऽभूत् । तथाहि–कुण्डिन्यां नगर्यां भीष्मकनरपतेः पुत्रस्य रुक्मिणनृपस्य भगिनी रुक्मिणी कन्याऽभूत्। इतश्च द्वारिकायां कृष्णहरेर्भार्या सत्यभामा नाम्नी तस्या गृहे च नारदः कस्मिन्नपि समये आगतः, तया व्यग्रया न सम्यगुपचरितस्ततः कुपितोऽसौ तां प्रतिसापत्न्यं करोमीति विभाव्य कुण्डिनीं नगरीमुपगतः, रुक्मिण्या प्रगतः सन् कृष्णस्य महादेवी भवेत्यभिनन्द्य कृष्णगुणान् तत्पुरतो व्यावर्ण्य तं प्रति तां सानुरागामकरोत्, तद्रूपं च चित्रपटे विलिख्य द्वारकायां कृष्णस्य तत् प्रदर्श्य तमपि तां प्रति साभिलापमकरोत् , ततः कृष्णो रुक्मिणीं याचितवान् , रुक्मिभ्राता न दत्तवान्, शिशुपालाभिधानं महाबलं राजसूनुमानीय विवाहमारंभितवान् , रुक्मिणीसत्कया पितृष्वस्रा च कृष्णस्य रुक्मिण्यपहारार्थे लेखः प्रेषितवान् । गतश्च रामकेशवौ नगरीमागतौ, रुक्मिणी पितृष्वस्रा सह चेटिकापरिवृता देवतार्चनव्याजेन समागता, कृष्णेन रथमारोपिता ततस्तौ द्वारकाभिमुखौ तां गृहीत्वा प्रचलितौ, चेटिकाभिः पूत्कृतं निर्गतौ सदर्पौ चतुरङ्गबलोपेतौ रुक्मिणीव्यावृत्त्यर्थं रुक्मिशिशुपालमहाराजौ, ततो विनिवृत्य हलिना हलमुशलाभ्यां दिव्यास्त्राभ्यां तद्बलं चूर्णितं, विमुक्तौ कृच्छ्रजीवितौ शिशुपालरुक्मिणाविति मिथुनार्थं स्त्रीमुख्यं युद्धमिति

कथालेशः ॥

तथा पद्मावतीकृते संग्रामोऽभूत् , अत्रैवाऽरिष्ठनगरे राममातुलस्य हिरण्यनाभाभिधाननृपस्य दुहिता पद्मावती जाता, तस्याश्च स्वयंवरमुपश्रुत्य रामकेशवाद्योऽन्ये च युवराजकुमारास्तत्राऽऽयाताः ततश्च—

पुएइ भाइणिज्जे विहीए सो तत्थ रामगोविन्दा । रेवगनामो जिट्ठो भाया य हिरण्णनाभस्स ॥१॥
पिउणा सह पव्वइओ, सो तित्थ नमिजिणस्स गयमोहो । तस्स य रेवयनामा रामा सीमा य बन्धुमई ॥२
दुहियाओ पढमं चिय, दिन्नाओ आसि तेण रामस्स । तत्थ य सयंवरंमी, सव्वेसिं नरवरिंदाणं ॥३॥
पुरओ च्चिय तं गेण्हई आहव कुशलाण कण्णगं कण्हो । जायं च पत्थिवेहिं जुज्झं सह जायबाणउलं ॥४॥
सव्वत्तो विद्दविओ मुहूत्तमित्तेण सव्वनरनाहो । रामो कण्णचउक्कं, हरीवि पउमावई कन्नं ॥५॥
गहिउं ताहिं समेया समागया नियपुरे सव्वेत्ति, इति पद्मावत्या कृते संग्रामः इति कथालेशः ॥ तारायाः कृते

---

पूजयति भागिनेयौ, विधिना स तत्र रामगोविन्दौ । रैवतनामा ज्येष्ठो, भ्राता च हिरण्यनाभस्य ॥१॥
पित्रा सह प्रव्रजितः, स तत्र नमिजिनस्य (तीर्थे) गतमोहः । तस्य च रैवतनाम्नी, रामा सीमा च वन्धुमती ॥२॥
दुहितरः प्रथममेव दत्ता आसन् तेन रामाय । तत्र च स्वयंवरे सर्वेपां नरवरेन्द्राणाम् ॥३॥
पुरत एव तां गृ ाति युद्धकुशलानां कन्यकां कृष्ण. । जातं च पार्थिवैर्युद्धं सह यादवानामतुलम् ॥४॥
सर्वतो विद्रुतो मुहूत्तमात्रेण सर्वनरनाथः । रामः कन्यकाचतुष्कं हरिरपि पद्मावती कन्याम् ॥५॥
गृहीत्वा ताभि समेताः समागता निजपुरवरे सर्वे ॥

संग्रामोऽभवत्तथाहि—

किष्किन्धापुरे वालीसुग्रीवाभिधानौ आदित्यरथाभिधानस्य विद्याधरस्य सुतौ वानरविद्याधरौ बभूवतुः । तत्राऽऽदित्यराजाऽङ्गजो निजाऽभिमानेन वाली निजराज्यं सुग्रीवाय दत्त्वा कृतप्रव्रज्यः सिद्धः । अथ सुग्रीवो राज्यं कुर्वन् तस्य भार्या तारा बभूव, ततश्च कश्चित् खेचराधिपः साहसगतिनामा तारापरिभोगलालसः सुग्रीवरूपं विधायान्तःपुरं प्रविवेश । तया च चिह्नैः प्रत्यभिज्ञाय निवेदिते निजतनुजादिमन्त्रिमण्डलस्य, तच्च सुग्रीवद्वयमुपलभ्य किमिदमाश्चर्यमिति विस्मयं जगाम । ततश्च निर्घाटितौ द्वावपि पुरात् युध्येते मत्सरेण द्वावपि अस्खलितोऽलीकसुग्रीवस्ततश्चासौ सत्यसुग्रीवो हनुमदाभिधानमहाविद्याधरराजपार्श्वे गत्वा निवेदयतिस्म स त्वागत्य तयोर्विशेषमजानन्नकृतोपकार एव स्वपुरमगमत् ॥ ततश्च लक्ष्मणविनाशिते खरदूषणसम्बन्धीनि पाताललंकापुरे राज्यावस्थं रामदेवमाकलय्य शरणं प्रपन्नस्ततस्तेन सह समागतः सलक्ष्मणो रामः किष्किन्धापुरं स्थितो बहिःकृतश्च सुग्रीवेण वाहुशब्दस्तमुपश्रुत्य समागतोऽसावलीकसुग्रीवो रथारूढो रणरसिकः सन् तयोर्विशेषमजानंस्तद्बलं रामश्च स्थित उदासीनतया, कदर्थितः सुग्रीवः इतरेण, रामस्य गत्वा निवेदितं सुग्रीवेण देव ! तव पश्यतोऽप्यहं कदर्थितस्तेन, रामेणोक्तं कृतचिन्हः पुनर्युद्धस्व, ततोऽसौ पुनर्युद्ध्यमानो रामेण शरप्रहारेण पञ्चत्वमापादितोऽलीकसुग्रीवः, सत्यसुग्रीवस्तु तारया सह भोगान् बुभुजे इति तारार्थं युद्धं कथालेशः ॥ काञ्चनाकृते संग्रामोऽभूत् सा काञ्चनाकथानकं तु केचित्तु काञ्चनां चिल्लणां वदन्ति परं बृहट्टीकाकारेण अप्रतीतं उक्तं अतो न लिखितं ।

तथा रक्तसुभद्रायाः कृते संग्रामो जातः । तत्र सुभद्रा कृष्णवासुदेवस्य भगिनी सा च पाण्डुपुत्रेऽर्जुने रक्ता तेन हेतुना रक्तसुभद्रेति नाम जातं, सा चैकदा अर्जुनसमीपमुपागता कृष्णेन च तद्विनिवर्त्तनाय बलं प्रेरितं, अर्जुनेन तयोल्लसितरणरसिकेन तद्विजित्य

ईए ताराए कंचणाए रत्तसुभद्दाए अहिन्नियाए सुवन्नगुलियाए किन्नरीए सुरूवविज्जुमतीए य,

सा परिणीता, कालेन च तस्या अभिमन्युनामा महाबलः पुत्रो जात इति

अहिन्निका अप्रतीता वृत्तिकारेण लिखिता ततो नोक्ता कथा। तथा सुवर्णगुलिकायाः कृते सङ्ग्रामो जातः, तथाहि–सिन्धुसौवीरदेशेषु उदायनस्य राज्ञः प्रभावत्याः देव्याः सत्का देवदत्ताभिधाना दास्यभूत्। सा च देवनिर्मितां गोशीर्षचन्दनमयीं श्रीमन्महावीरप्रतिमां राजमन्दिरान्तर्वर्त्तिचैत्यभवनव्यवस्थितां प्रति परिचर्यार्थे स्थापिता, अन्यदा च तद्वन्दनार्थं श्रावको गान्धारनामा देशान्तरादायातवान्, तत्राऽऽगतोऽसौ रोगेणोपद्रुतशरीरस्तया च सम्यग् प्रतिचरितः, तुष्टेन तेन सर्वकामगुणिकमाराधितदेवतावितीर्णं गुटिकाशतं दापितवात्। तया च कुब्जा विरूपा सुरूपा भूयासमिति मनसि विभाव्यैका गुटिका भक्षिता, तत्प्रभावात् सुवर्णवर्णजातेति सा सुवर्णगुलिकेति नाम्ना प्रसिद्धिमुपागता, ततोऽसौ चिन्तितवती जाता मे रूपसंपत् किमेताया भर्त्तृविहीनायाः, अयं राजा तु पितृतुल्यो नाऽभिलषणीयः। शेषास्तु पुरुषमात्राऽनपेक्षगुणाः ततः किं तैस्तत उज्जयिनीपतिं चण्डप्रद्योतं मनसि आधाय गुटिका भक्षिता, ततोऽसौ देवताऽनुभावात् तां विज्ञाय तदानयनाय हस्तिरत्नमधिरुह्य तत्राऽऽयातः, आकारिता सा, तयोक्तमागच्छामि परं यदि प्रतिमां नयसि, तर्हि त्वामेष्यामि, ततोऽसौ स्वनगरीं गत्वा तद्रूपां प्रतिमां कारयित्वा तामानीय तथैव रात्रावायातः, स्वकीयप्रतिमां देवनिर्मितप्रतिमास्थाने विमुच्य देवनिर्मितां प्रतिमां सुवर्णगुलिकां च गृहीत्वा गतः, प्रभाते च चण्डप्रद्योतगन्धहस्तिविमुक्तमूत्रपुरीषगन्धेन विमदान् स्वहस्तिनो विज्ञाय ज्ञातचण्डप्रद्योतागमो अवगतप्रतिमा सुवर्णगुलिकानयनस्योदायनराजः परं कोपमुपगतो दशभिर्महाबलैः राजभिः सहोज्जयिनीं प्रति प्रस्थितः। अन्तरा पिपासितसैन्यस्त्रिपुष्करकरणेन प्रभावतीदेवतया निस्तारितसैन्यः क्षेमेणाक्षेपेणो–

ज्जयिन्याः बहिः प्राप्तः, रथारूढश्च धनुर्वेदकुशलतया सन्नद्धहस्तिरत्नारूढं चण्डप्रद्योतं प्रजिहीर्षुर्मण्डल्या भ्रमन्तं चलन्तं ततश्चरणतलभल्लशरव्यथितहस्तिनो भुवि निपातनेन वशीकृतवान्, दासीपतिरिति ललाटपट्टे मयूरपिच्छेनांकितवानिति। मैथुनार्थं दारुणो रणः इत्युक्तं। किन्नरी सुरूपा विद्युन्मती चाऽप्रतीता वृत्तिकारेणोक्ता, अन्यथा विद्युन्मती दास्या सह संप्रयुद्धं कोणिकनृपसम्प्रदायोऽपि केचिद्वदन्ति तथा च किन्नरीस्वरूपमपि चित्रसेननृपस्य किंनर्या सह राज्ञो रणः प्रवृत्त इत्यपि सम्बन्धान्तरे दृश्यते, परं वृत्तिकृद्भिरनुक्तत्वान्न लिखितं। तथा रोहिणीकृते सङ्ग्रामो जातः तथाहि—

अरिष्टपुरे नगरे रुधिरो नाम राजा सुमित्रा नाम देवी, तत्पुत्रो हिरण्यनाभः, दुहिता च रोहिणी, तस्याः विवाहार्थं रुधिरेण स्वयंवरो घोषितो, मिलिताश्च जरासंधप्रभृतयः समुद्रविजयादयो नराधिपतयः उपविष्टाश्च यथायथं रोहिणीं विलोकयमानाः, अथ क्रमेणोपदर्शितेषु सकलराजसु रागमकुर्वती तूर्यवादकानां मध्येऽवस्थितेन समुद्रविजयादीनामनुजेन वसुदेवेन देशान्तरसंचारिणा तत्राऽऽयातेन राजसूनुना पाणविकाकारं बिभ्रता पाणविकवादनमध्ये इत्युक्तवता यथा—

मुग्धमृगनयनयुगले! शीघ्रमिहागच्छ, मैव[1] वरयस्व ॥ कुलविक्रमगुणशालिनि! त्वदर्थमहमागतो यदिह ॥१॥

इत्यक्षरानुकारिध्वनौ प्रवादिते विकसितस्मेरनयनकपोला संजातानुरागा सरभसमुपश्रुत्य स्वहस्तेन वसुदेवस्य गलकन्दले मालामवलम्ब्य वृत्तो मयेत्युक्तमाकर्ण्य ततस्ते राजान ईर्ष्याशल्यवित्रुट्यमानमानसो वसुदेवेन सार्द्धं संग्रामायोपेताः, रणरङ्गरसिकेन वसुदेवेनाऽपि पाणविकाकारेण सर्वान् निर्जित्य रोहिण्यपि तथा पणवं वादयति यथा—वसुदेवस्य जयो जातस्तथा वादितवती परिणीता

१ मैव चिरयस्व प्रत्यन्तरे.

रोहिणी ततश्च तस्या रामाभिधानो बलदेवस्तनुजातः इति रोहिण्यर्थे संग्रामो जातः। विस्तरतस्तु वसुदेवहिण्डितोऽवसेय इति ज्ञातं।

तथा मिथुनसंज्ञापरिगृहिताः सन्तोऽनेकजीवाः परस्परं विवदमाना; लोकेऽपि श्रूयन्ते दृश्यन्तेऽपि च घनघोररौद्रपरिणामपरिपाकतो नरकयातनां विविधां सहन्ते तप्ताऽयःपुत्तलिकापरीरम्भणाद्यनेकपूर्वोक्तां यतः-

नरएसु जाइं अइकक्खडाइं, दुःखाइं परमतिक्खाइं। को वण्णेइ ताइं जीवंतो वासकोडीहिं ॥१॥

कक्खडदाहं सामलि, असिवण-वेयरणि-पहरणसएहिं ॥ जा जायणाओ पावंति निरया तं अहम्मफलं ॥२॥

तिरिया कसंकुसारानिवायवहमारणबन्धणसयाइं। नवि इह पावंति, परछिज्जइ नियमिया हुंता ॥३॥

आजीवसंकिलेसो, सुक्खं तुच्छं उवद्दवा बहुया। नीयजणसेवणाविय, अणिट्ठवासो य मणुयस्से ॥४॥

चारयनिरोह-वह-बंध-रोग, धणहरणमरणवसणाइं। मणसंतावो अयसो, विग्घोवणया य माणुस्से ॥५॥

चिंतासंतावे हि य, दारिद्दरूवाइं दुप्पकत्ताइं। लद्धूण वि माणुस्सं, मरंति केइ सुनिव्विण्णा ॥६॥

देवाणवि देवलोए, जं दुक्खं तं नरो सुभणिओ वि। न भणइ वाससएणवि, जस्स वि जीहा सयं हुज्जा ॥७॥

देवावि देवलोए, दिव्वाभरणाणुरंजियसरीरा। जं परिवडंति तत्तो, तं दुक्खं दारुणं तेसिं ॥८॥

तं सुरविमाणविभवं, चिंतिय चवणं च देवलोगाओ। इय बलिओ चिय जन्नवि, फुट्टइ सयसक्करं हिययं॥९॥

इसा-विसाय-मय-कोह, लोह-माएहिं एव माइहिं। देवावि समभिभूया, तेसिं कत्तो सुहं नाम ॥१०॥

एवं चउगइगमणे, संसारे दुहमए सरंताणं। जीवाणं नत्थि सुहं, संवरधम्मे अपत्ताणं ॥११॥

अन्नेसु य एवमादिएसु बहवो महिलाकएसु सुव्वंति अइक्कंता संगामा गामधम्ममूला अबंभसेविणो इह-लोए वि नट्ठ कीत्ति परलोएवि य णट्ठा महया मोहतिमिसंधकारे घोरे तसथावरसुहुमबादरेसु पज्जत्तमपज्जत्त-साहारणसरीरपत्तेयसरीरेसु य अंडज-पोतज-जराउय-रसज-संसेइम-संमुच्छिम-उब्भिय-उववादिएसु य नर-गतिरियदेवमाणुसेसु जरामरणरोगसोगबहुले पलिओवमसागरोवमाइं अणादीयं अणवदग्गं दीहमद्धं चाउरंत-

सण्णा-कसाय-विगहा, पमाय-मिच्छत्त दुट्ठजोयाय। दुहज्झाणवसगा, जीवा पावंति दुहसेणिं ॥१२॥

एवं नाउण सया, अपमाएणं हविज्ज दक्खत्ते। तम्हा मोहाइदोससंगयमाणाइयं मुयह ॥१३॥

इति श्री उपदेशलेशगाथा प्ररूपिता वृत्तिकारेणेति ॥ अन्येषु एवमादिषु-अपरेषु एवं प्रकारेषु बहवोऽनेके संग्रामाः महिला स्त्री त-स्यां कृतेन तदर्थं श्रूयन्ते। अतिक्रान्ताः-अतीताः कृताः, संग्रामाः-रणाः, ते सर्वे ग्रामधर्ममूलाः विषयहेतवः अब्रह्मसेविनश्चेह लोकेऽपि नष्टकीर्त्तयः परदाराभिगमनात् गतयशसः, परलोकेऽपि विनष्टाः-दुर्गतिगामिनः, किंभूता इत्याह—महामोह एव तिमिस्रान्धकारं अत्यन्तं तमो यत्र स तथा तत्र, तथा घोरे-दारुणे दुःखेषु च त्रसस्थावरसूक्ष्मबादरेषु समयप्रसिद्धेषु पर्याप्तापर्याप्तकेषु साधारणप्रत्ये-कशरीरेषु च, अण्डजाः-पक्षिसर्पाद्याः पोतजाः-कुञ्जरादयः, जरायुजाः नृगवाद्याः, रसजास्तमीतनातक्रारनालादिजाताः, संस्वेदिमाः यूका मत्कूणादयः, समुर्च्छिमा-मत्स्यदर्दुरादयः, उद्भिज्जा भुवं उद्भिद्य जाताः खञ्जनादयः, उत्पातिका देवनारकादयस्तेषां द्वन्द्वः एतेषामेव संग्रहेणाह-नरकतिर्यग्देवमनुष्येषु जरामरणरोगशोकबहुले परलोके चेति ते कियन्तं कालं विनश्यन्ति इत्याह-पल्योपमानि

१ इहलोए ताव नट्ठा

संसारकंतारं अणुपरियट्टंति जीवा मोहवसं निविट्ठा।

एसो सो अबंभस्स फलविवागो इहलोइओ परलोइओ य अप्पसुहो बहुदुक्खो महब्भओ बहुरयप्पगाढो दारुणो कक्कसो असाओ वाससहस्सेहिं न मुच्चति, न य अवेदइत्ता अत्थि हु मोक्खोत्ति, एवमाहंसु नायकुलनंदणो महप्पा जिणो उ वीरवरनामधेज्जो कहेसी य अबंभस्स फलविवागो एयं तं अबंभंपि चउत्थं सदेवमणुयासुरस्स लोगस्स पत्थणिज्जं एवं चिरपरिचियमणुगयं दुरंतं चउत्थं अधम्मदारं समत्तंति बेमि ४॥ (सू० १६)

सागरोपमाणि बहूनि यावत् अनादिकं अप्राप्तमूलं अनवदग्रं अनन्तं दीर्घाध्वानं-दीर्घमार्गं चातुर्गतिकसंसारकान्तारं अनुपरिवर्त्तते परिभ्रमन्ते जीवाः, मोहवशेन संनिविष्टा अब्रह्मणि निष्ठा ये ते तथा, एषः प्रत्यक्षेणैव दृष्टो-ज्ञानचक्षुर्विवस्वता इति चतुर्थाश्रवत्वेन प्रसिद्धः, अब्रह्मणः फलविपाकः उदयप्राप्तरसपरिभोगफलः इह लौकिकः, पारलौकिकश्च, अल्पसुखः, बहुदुःखः, महद्भयः, बहुरजसापापेन संप्रगाढो व्याप्तः, दारुणो घोरफलत्वात्, कर्कशः-कठिनः, असातामयः, वर्षसहस्रैरपि न मुच्यते तद्विपाकात्, अवेदयित्वा अक्षीणत्वात् न मोक्षः वेदयित्वा तद्विपाकं निर्जरयित्वैव मोक्षस्तत्कर्मणः सकाशादिति शेषः, एवममुना प्रकारेण उक्तवान् ज्ञातकुलनन्दनः, महात्मा, जिनो-वीतरागः तु-पुनः वीरवरनामधेयो महावीरः कथितवात्, अब्रह्मणः फलविपाकात् एतकं इदमेव चतुर्थं अब्रह्ममैथुनमिति। सहितमनुजासुरस्य समग्रविषयिलोकस्य प्रार्थनीयं-अभिलषणीयं एवमिति प्रकारेण चिरपरिचितं-चिरकालसेवितं सर्वजीवैरनुगतं चतुर्थं अब्रह्मनामकं चतुर्थं अधर्मद्वारं समाप्तं इति-परिसमाप्तौ ब्रवीमीति पूर्ववत् तीर्थंकरोपदेशेन न तु स्वबुद्धया

॥इति श्रीदशमाङ्गस्य प्रश्नव्याकरणनामरूपस्य। तुर्याश्रवस्य विवरणमेतल्लिखितं समासेन ॥१॥

# अथ पञ्चमपरिग्रहाश्रवाध्ययनम्

जंबू ! इत्तो परिग्गहो पंचमो उ नियमा णाणामणिकणगरयण- महरिहपरिमल–सपुत्तदार- परिजण–दासी-दास–भयग–पेस–हय–गय–गो–महिस–उट्ट–खर–अय–गवेलग–सीया–सगड–रह–जाण–जुग्ग–संदण–सयणा

---

अधुना पञ्चममारभ्यते, अस्य चाऽयमभिसम्बन्धः पूर्वाध्ययनेन सह पूर्वमब्रह्मस्वरूपमुक्तं तच्च परिग्रहमन्तरेण न भवति, 'संसारमूलमारम्भास्तेषां हेतुः परिग्रहः' इति वचनात् तत्स्वरूपमत्रोच्यते तत् स्वरूपं प्रतिपादनपरं 'जारिसओ जे नामा'इत्यादि पूर्ववत् पञ्चद्वारात्मकप्रस्तावनापरमादिसूत्रमाह–

जम्बूरिति शिष्यामन्त्रणं जम्बूस्वामिनमुद्दिश्य सुधर्म्मास्वामी आह–इतश्चतुर्थाश्रवद्वारादनन्तरं परि–सामस्त्येन ग्रहणं परिग्रहणं–मूर्च्छावशेन परिगृह्यते आत्मभावेन ममेति बुद्ध्या गृह्यते इति परिग्रहः।

पञ्चमः सूत्रोक्तापेक्षया नियमात्–निश्चयेन अयमेव पञ्चमः नाऽन्य इति लभते सूत्रादारभ्य निरयमूल इत्येवं सूत्रं भणनीयं, नानाविधा ये मणयश्चन्द्रकान्ताद्याः कनकं–सुवर्णं रत्नानि–कर्केतनादीनि, महार्घ्याः–सुगन्धिद्रव्यसन्दोहाः सपुत्रदाराः–सुतयुक्तकल- 

सण–वाहण–कुविय–धण–धन्न–पाणभोयणाच्छायण–गंध–मल्ल–भायण–भवणविहिं चेव बहुविहीयं भरहं णग–णगर–णियम–जणवय–पुरवर-दोणमुह–खेड–कब्बड–मडंब–संबाह-पट्टण–सहस्सपरिमंडियं थिमियमेइणीयं एग-

त्राणि, परिजनः–परिवारः, दासदास्यः–चेटकचेटयः, स्वगृहे पोष्यमानाः भृतकाः, मूल्यसहितभृत्याः प्रेष्याः कार्यप्रयोगेषु ग्रामान्तरादिप्रेषणयोग्याः, हया–अश्वा, गजा–हस्तिनो, गावो–धेनवो वृषभा वा, महिषाः, उष्ट्राः, खराः, अजाः, गवेलकाश्च प्रतीताः, शिबिका कूटाकारा आच्छादितजम्पानविशेषाः, शकटा–गन्त्र्यः, रथाश्वतुश्चक्राणि, यानानि च गन्त्रीविशेषाः, युग्यानि वाहनानि गोल्लदेशविशेषाभिधानानि जम्पानानि वा, स्यन्दनाश्च–रथविशेषाः, शयनादीनि प्रतीतानि, वाहनानि च यानपात्राणि, कुप्यानि च गृहोपस्कराः[1] खट्वातल्पादयः, धनानि गणिमादीनि, धान्यानि शाल्यादीनि, पानं–पेयवस्तु, भोजनं चतुर्विधाहाररूपं. आच्छादनं वस्त्रं, गन्धं–सुगन्धचूर्णादिद्रव्यं, माल्यं पुष्पादि, भाजनानि स्थालकचोलकादीनि, भवनानि गृहाणि एतेषां द्वन्द्वः तेषां यो विधिः–कार्यं साध्य तत्पुरुषः, तानि बहूनि चित्राणि यस्मिन् तादृशं भरतं–भरतक्षेत्रं अथवा तेषां साधनोपायो यस्मिन् तादृशं भरतं वा नगाः–पर्वताः नगराणि कररहितानि राजदेयं धनं करो लश्चादि तन्नास्ति यत्र, निगमा वाणिज्यकृतवणिग्स्थानानि, जनपदाः–देशाः. पुरवराणि–नगरोपान्तवर्त्तीनि भूभागानि, द्रोणमुखानि–जलस्थलपथोपेतानि, खेटानि धूलीप्राकाराणि, कर्वटानि–कुत्सितनगराणि, मडम्बानि–दूरस्थानानि वा संग्रामान्तराणि, संवाहाः–प्रभूतचातुर्वर्ण्यनिवासाः, पत्तनानि–रत्नोत्पत्तिस्थानानि, तेषां यानि सहस्राणि तैः परिमण्डित युक्तं यत् तत्, भारतं स्तिमितमेदिनीकं–निर्भयमेदिनीनिवासिजनं[2], एकच्छत्रं–एकराजकमित्र ससागरान्तं–ससमुद्रान्तं यावत्, भुक्त्वा

१ घरवाखरो इति भाषा. २ ॰मुदितवसुधाधारकं

च्छत्तं ससागरं भुंजिऊण वसुहं अपरिमियमणंततण्हमणुगयमहिच्छसारनिरयमूलो, लोभकलिकसायमहक्खंधो, चिंतासयनिचियविपुलसालो, गारवपविरल्लियग्गविडवो, नियडितयापत्तपल्लवधरो, पुप्फफलं जस्स कामभोगा आयासविसूरणाकलहपकंपियग्गसिहरो, नरवतिसंपूजितो, बहुजणस्स हिययदइओ, इमस्स मोक्खवरमोत्तिम-

परिभुज्य वसुधां पृथ्वीं भरतैकदेशामपि एतद्भोगेऽपि, अपरिमिता–प्रमाणातीता अनन्ता अतिधनतृष्णा–विषयलौल्यता यस्यां सा तां प्रति अनुगतं–प्राप्तं एतावता परिग्रहप्राप्तिस्तत् संरक्षणोपायस्तदवियुजनादिप्रयोगकरणेन या महेच्छा–तदार्त्तरौद्रस्योदारता तदेव सारं–प्रधानं यस्मिन् तादृशः परि हः, पुनः कीदृशो निरयो–नरकस्तदेव मूलानि यस्य परिग्रहतरोः अथवा अपरिमितादिविशेषणसारेण निरयमूल इति। लोभः अप्राप्तप्राप्तवस्तुषु या गृद्धिः कलिः–कलहस्तेषां संयोगवियोगौ कषायाः क्रोधमानमायादयस्त एव महान् [1]स्कन्धोः यस्य सः। इह कषायग्रहणे यत् लोभग्रहणं भिन्नं कृतं तत्तु परिग्रहस्य तत् प्राधान्यत्वात्, आयासाश्च मनःप्रभृतीनां खेदाः, चिन्ताश्चिन्तनानि पाठान्तरे चिंताशतानि तान्येव विपुला–विस्तीर्णा निचिता–अन्तररहिता घनाः शालाः–शाखा यत्र स तथा, गौरवाणि–ऋद्ध्यादीनि तेषु आदरकरणानि तान्येव पविरल्लियत्ति विस्तारवत् अग्रविटपं शाखामध्याग्रभागं यस्य स तथा, पाठान्तरे गौरव–प्रविरेल्लिताग्रशिखर इत्यपि पाठः उपचारकरणेन मायाकरणेन वञ्चनानि मायाकरणाच्छादनार्थानि मायान्तराणि निकृतिस्तद्भावनया तदेव पत्रपल्लवास्तान् धारयति तथा, यस्य परिग्रहतरोः कामभोगाः पुष्पाणि फलानि एतावता कामाः पुष्पं अभिलाषरूपं भोगाः तदुपभोगसेवनाफलमित्यर्थः, आयासः–शरीरखेदः, विसूरणा चित्तखेदः, कलहो–वचनभण्डनं एवं प्रकम्पितं–प्रकम्पमानं अग्रशिखरं–शिखाग्रं

[1] धड इति भाषा.

ग्गस्स फलिहभूओ चरिमं अहम्मदारं (सू० १७)

तस्स य नामाणि इमाणि गोण्णाणि होंति तीसं, तंजहा–परिग्गहो १ संचयो २ चयो ३ उवचओ ४ निदाणं ५ संभारो ६ संकरो ७ आयरो ८ पिंडो ९ दव्वसारो १० तहा महिच्छा ११ पडिबंधो १२ लोहप्पा १३ महिद्धि १४ उवकरणं १५ संरक्खणा य १६ भारो १७ संपायउप्पायको १८ कलिकरंडो १९ पवित्थरो २० अण-

---

यस्य स तथा, नरपतिश्चक्रवर्त्यादिस्तैः संपूजितस्तदभिलापपूर्णताहेतुत्वात्, बहुजनस्य हृदये दयित इव वल्लभः रागिणां हृदयंगमत्वात्, अस्य प्रत्यक्षस्य मोक्षवरस्य मुक्तिरेव निर्लोभ उपायो मोक्षवरमुक्तिमार्गस्तस्य परिघभूतः–अर्गलोपमो विघात इति, चरिमं– प्रान्तं अधर्म्मद्वारं, अनेन यादृश इति द्वारं उक्तं, अथ यन्नाम इति द्वारं उच्यते—

तस्य परिग्रहधर्मद्वारस्य नामानि गुणनिष्पन्नानि तद्गुणयुक्तानि भवन्ति त्रिंशत्सङ्ख्याकानि तद्यथा–तद्दर्शयति–परिगृह्यत इति परिग्रहः–शरीरोपध्यादि अथवा परिग्रहणं मूर्च्छात्वेन स्वीकारः परिग्रहः १ संचीयते चयनं सर्वादनबुद्धिः संचयः २ एवं चयो वर्त्तमानिकाकालाऽपेक्षया ३ उपचयः पौनःपुन्येन आगामिकालापेक्षया ४ नितरां चेतसि बुद्ध्या धीयते इति निधानं निदानं वा सर्व्वदोषाणामिति ५ संभ्रियते–धार्यते अज्ञानरक्षणादि उपायान् इति संभारः ६ संकरणं–संपिंडनं एकीकरणं संकरः ७ आदरः तदुपायप्रवर्त्तनत्वात् आ संताप–कोपयोरितिवचनात् दरो भयं ८। पिंडं–एकत्रीकरणं ९ द्रव्य एव सारं यत्र तद्द्रव्यसारः १० तथा महेच्छा अपरिमितवाञ्छा ११ प्रतिबन्धः अभिष्वङ्गः प्रसङ्ग इत्यर्थः १२ लोभात्मा लोभस्वभावः १३ महती इच्छा महर्द्धिका अथवा महर्द्दिका महती अर्दियाश्चा महर्द्दिका १४ उपकरणं उपधिः १५ संरक्षणा अभिष्वङ्गवशात् शरीरादिरक्षणं १६ भारो–गुरुताकारणं १७ संपातानां

त्थो २१ संथवो २२ अकीत्ति २३ अगुत्ती आयासो २४ अविओगो २५ अमुत्ती २६ तण्हा २७ अणत्थको २८ आसत्ती २९ असंतोसोत्तिविय ३०, तस्स एयाणि एवमादीणि नामधेज्जाणि होंति तीसं (सू० १८)

तं च पुण परिग्गहं ममायंति लोभघत्था भवणवरविमाणवासिणो परिग्गहरुती परिग्गहे विविहकरण-बुद्धी देवनिकाया य, असुर-भुयग-सुवण्ण-विज्जु-जलण-दीव-उदहि-दिसि-पवण-थणिय-अणवंनिय-पणवंनिय-इसिवातिय-भूतवाइय-कंदिय-महाकंदिय-कुहंड-पतंगदेवा पिसाय-भूय-जक्ख-रक्खस-किंनर-

---

अनर्थमीलकानां उत्पादकः १८ कलीनां-कलहानां करण्डको भाजनविशेषः १९ प्रविस्तारो धनधान्यादिविस्तारः २० अनर्थहेतुत्वात् अनर्थः २१ संस्तवः-परिचयः प्रसंगहेतुत्वात्, २२ अकीर्त्तिः-अयशः २३ तथा अगुप्तिः इच्छाया अगोपनं २४ आयासो-विषादः खेदः तद्धेतुत्वात् परिग्रहोऽपि आयासः २४ अवियोगः-अत्यजनं पापानां धनादीनां वा २५ अमुक्तिः लोभाऽत्यजनात् मोक्षाऽप्राप्तिः २६ तृष्णा धनाद्याकांक्षा २७ परमार्थवृत्त्या अनर्थकः अप्रयोजकः २८ आसक्तिर्धनादौ प्रसङ्गः २९ असन्तोषः-अनादित्वात् तृष्णायाः ३० चैतानि चकारः पूर्त्तौ, तस्य परिग्रहस्य एतानि प्रत्यक्षाणि एवमादिकानि नामानि भवन्ति त्रिंशत् ३० ॥

तं च परिग्रहं प्रति ममदीयं इत्येतत् मूर्च्छावशात् कुर्वन्ति स्वीकुर्वन्ति, के के प्राणिनो ? लोभग्रस्ता तृष्णाव्याकुलास्तान् नामग्राहमाहेति भवनविमानवासिनः परिग्रहो रोचते येषां ते परिग्रहरुचयः, परिग्रहे विविधकरणे विशिष्टबुद्धयः असन्तमपि परिग्रहं विविधं कर्त्तुमिच्छवः, देवनिकाया वक्ष्यमाणा ममायंत इति शेषः, असुरकुमाराः, भुजगाः-नागाः, [गरुडध्वजाः-गरुलाः,] सुवर्णकुमाराः, विद्युत्कुमाराः, ज्वलना-अग्निकुमाराः, द्वीपकुमाराः, उदधिकुमाराः, दिशिकुमाराः, पवना-वायुकुमाराः, स्तनितकुमाराः एते दशाऽपि

किंपुरिस-महोरग-गंधव्वा य तिरियवासी

पंचविहा जोइसिया य देवा बहस्सती-चंद-सूर-सुक्क-सनिच्छरा राहुधूमकेउवुधा य अंगारका य तत्ततवणिज्जकणयवण्णा जे य गहा जोइसम्मि चारं चरंति केऊ य गतिरतीया अट्ठावीसतिविहा य नक्खत्तदेवगणा नाणासंठाणसंठियाओ य तारगाओ ठियलेस्सा चारिणो य अविस्साममंडलगती

---

भवनपतयः, अणपन्निकाः १ पणपन्निकाः २ ऋषिवादिकाः ३ भूतवादिकाः ४ क्रन्दिताः ५ महाक्रन्दिताः ६ कुष्माण्डाः ७ पतङ्गा ८ देवाः एते व्यन्तरनिकायोपरिवर्त्तिनो व्यन्तरप्रकाराः अष्टौ निकायाः एतेषां असुरादीनां द्वन्द्वः। तथा पिशाचादयो अन्येऽष्टौ भेदाः-पिशाच १ भूत २ यक्ष ३ राक्षस ४ किन्नर ५ किंपुरुष ६ महोरग ७ गन्धर्वनामानः ८ तेषां तिर्यग्वासिनां व्यन्तराणां वानव्यन्तराः विशेषेण वनान्तरे वसनशीलाः। पञ्चविधा देवाः ज्योतिश्चक्रे चारं-चरणं चरन्ति इत्यर्थः बृहस्पतिश्चन्द्रः सूर्यः शुक्रः शनैश्चरः राहुः धूमकेतुः बुधः अङ्गारको-भौमः एते ग्रहविशेषाः प्रसिद्धाः कीदृशाः? तप्ततपनीयकनकवर्णा-निध्मातरक्तवर्णेन हेम्ना तुल्याः, ये चाऽन्ये उक्ताद्व्यतिरिक्ताः ग्रहाः ज्योतिश्चक्रे चारं-चरणं चरन्ति इत्यर्थः, केतवोऽपि ज्योतिष्कविशेषाः कीदृशास्ते? गतिरतयो गमनशीलाः अष्टाविंशतिविधा नक्षत्रदेवगणा-अभिजिदादयः,नाना-विविधप्रकारसंस्थानसंस्थिताश्च तारकाः स्थितलेश्या-अवस्थितदीप्ताः मनुष्यक्षेत्राद्बहिः व्यवस्थिता स्थितलेश्याः, चारिणोत्ति मनुष्यक्षेत्रान्तःसंचरिष्णवः, अविश्रान्ता मण्डलेन-चक्रवालेन गतिर्यासां ताः, तिर्यग्लोकस्य उपरितनवर्त्तिनः, उर्ध्वलोकवासिनो द्विविधाः वैमानिका देवाः कल्पोपपन्नकल्पातीतभेदात्, तत्र कल्पोपपन्नाः द्वादशधा तानाऽऽह—

उवरिचरा उड्ढलोगवासी दुविहा वेमाणिया य देवा सोहम्मीसाण–सणंकुमार–माहिंद–बंभलोग–लंतक–महासुक्क–सहस्सार–आणय–पाणय–आरण–अच्चुया कप्पवरविमाणवासिणो सुरगणा गेवेज्जा अणुत्तरा दुविहा कप्पातीया विमाणवासी महिड्ढिका उत्तमा सुरवरा एवं च ते चउव्विहा सपरिसावि देवा ममायंति भवण-वाहणजाणविमाणसयणासणाणि य नाणाविहवत्थभूसणा पवरपहरणाणि य नाणामणिपंचवन्नदिव्वं च भाय-णविहिं नाणाविहकामरूवे वेउव्वितअच्छरगणसंघाते दीवसमुद्दे दिसाओ विदिसाओ चेतियाणि वणसंडे पव्वते

सौधर्म १ इशान २ सनत्कुमार ३ माहेन्द्र ४ ब्रह्मलोक ५ लांतक ६ शुक्र ७ सहस्रार ८ आनत ९ प्राणत १० आरण ११ अच्युत १२ कल्पवरविमानवासिनः सुरगणाः, द्विविधाः कल्पातीतास्ते के? ग्रैवेयकाः नवविधाः–हिट्ठिमहिट्ठिम १ हिट्ठिममज्झिम २ हिट्ठिमउवरिम ३ मज्झिमहिट्ठिम ४ मज्झिममज्झिम ५ मज्झिमउवरिम ६ उवरिमहिट्ठिम ७ उवरिममज्झिम ८ उवरिमउवरिम ९ एतेन चाऽपि ग्रैवेयकनामानि श्रुतापेक्षया, अनुत्तराश्च पञ्चाऽपि, ग्रैवेयकाऽनुत्तरभेदात् द्विविधाः कल्पातीता अपि विमानवासिनः महर्द्धिकाः–उत्तमदेवनिकराः एतेन उक्तप्रकारेण चतुर्विधा अपि देवाः सपरिकरा अपि ममत्वं कुर्वन्ति मदीयमेतत्सर्वं किं तदाह–भवनानि–गृहाणि वाहनानि–गजादीनि, यानानि–शकट–विशेषादीनि, विमानानि–देवगृहाणि शयनानि आसनानि प्रतीतानि नानाप्रकाराणि वस्त्राणि क्षौमदुकूलादीनि भूषणानि–आभरणानि प्रधानानि शस्त्राणि नानामणीनां पञ्चवर्णानि दिव्यं–प्रधानं भाजन-

१ भद्र १ सुभद्र २ सुप्रतिबद्ध ३ मनोरम ४ यशोभद्र ५ विशाल ६ चन्द्र ७ सुचन्द्र ८ दीप्त ९ एतान्यन्यान्यपि ग्रैवेयकनामानि
२ विजय १ वैजयन्त २ जयन्ताऽपराजित ३–४ सर्वार्थसिद्धिनामानः पञ्चानुत्तराः

य, गामनगराणि य, आरामुज्जाणकाणणाणि य, कूव-सर-तलाग-वावि-दीहिय-देवकुलसभ-प्पव-वसहि-माइयाइं बहुकाइं कित्तणाणि य परिगेण्हित्ता परिग्गहं विपुलदव्वसारं देयावि सइंदगा न तित्तिं न तुट्ठिं उवलभंति अच्चंतविपुललोभाभिभूतसन्ना वासहरइक्खुगार-वट्टपव्वय-कुंडल-रुचग-वरमाणुसोत्तर-कालोदधि-लव-

---

विधानं भाजनजातं येषां ते तथा, नानाप्रकाराणि कामरूपाणि, स्वेच्छया विकुर्वितानि एतानि अर्था-पदार्था यैस्ते तादृशा विकुर्वितवस्त्रादिभिः कृतविभूपाः शोभा यैस्ते। अप्सरोगणेषु कृतविकुर्वितरूपा वा ततः कर्मधारयः, तादृशाः सन्तः द्वीपसमुद्रात् दिशि विदिशासु चैत्यवृक्षान् आरामादीनां विशेषः वनानि वनखण्डानि एकानेकवृक्षस्थानानि, पर्वतान्, ग्रामान्, नगराणि, आरामा जनैर्वापिताः उद्यानानि-क्रीडावसतिस्थानानि, काननानि-गहनवनानि, कूपो-निपानं, सरो बद्धाऽबद्धं, तटागः खाताऽखातभेदः, वापिका आयता, दीर्घिका चतुष्कोणा, देवकुलं यक्षस्थानं, सभाबहुजनास्थानं, प्रपा-पानीयशाला, वसतिः-सामान्यगृहाणि इत्येवमादिकानि अवगन्तव्यानीत्यर्थः, कीर्त्त्यन्ते शब्दद्यन्ते विविधैर्नामभिरिति कीर्त्तनानि बहूनि कृतानि कारयितानि देवकुलादीनि तानि ममायंति परिग्रहत्वेन। विपुलं प्रधानं द्रव्यसारं प्रधानवस्तु देवा अपि सइन्द्रकाः इन्द्रसहिताः इन्द्रा देवाश्च किल महर्द्धयोर्वाञ्छितप्रापणसमर्था दीर्घायुषश्च भवन्ति, परं तथाऽपि तृप्तिं न प्राप्नुवन्ति, अपरापरविशेषप्राप्त्याकांक्षाऽबाधितत्वात् तुष्टिं-तोपं न उपलभन्ते, कुतः पुनरितरे इति कारणादेव सइन्द्रका उक्तं, किंभूतास्ते ? अत्यन्तं-गाढं विपुलं-विस्तीर्णं लोभाभिभूता संज्ञा-संज्ञानं लोभ एव प्रमाणं येषां ते तथा, वर्षधरेषु-हिमवदादिनगेषु, इषुकारेषु-धातकीखण्डपुष्करवरद्वीपार्द्धयोः पूर्वापरार्द्धयोर्मर्यादाकारिषु दक्षिणोत्तरायतेषु पर्वतविशेषेषु, वृत्तपर्वतेषु शब्दापातिविकटापात्यादिवर्त्तुलेषु विजयार्द्धपर्वतेषु कुण्डलेषु-जम्बुद्वीपादेकादशकुण्डलद्वीपान्तरवर्त्तिकुण्डलाकारकुण्डलाभिधेषु, रुचकेषु जम्बु-

लवण सलिल-दहपति-रतिकर-अंजणकसेल-दहिमुह-वपातुप्पाय-कंचणक-चित्तविचित्त-जमक-वरसिहरकू-
डवासी वक्खारअकम्मभूमिसु सुविभत्तभागदेसासु कम्मभूमिसु, जेऽवि य नरा चाउरंतचक्कवटी वासुदेवा बल-

द्वीपात् त्रयोदशरुचकवराभिधानद्वीपांतर्वर्त्तिनि कुण्डलाकारपर्वतेषु, मानुषोत्तरे-मानुष्यक्षेत्रावारके मण्डलाकारपर्वते, कालोदधौ-द्वितीय-
समुद्रे, लवणसमुद्रे, सलिलासु गङ्गादिमहानदीषु, द्रहपतिषु प्रधानद्रहेषु पद्म-महापद्मादिमहाद्रहेषु.रतिकरेषु-नन्दीश्वराभिधानाऽष्टमद्वीपच
क्रवालविदिक्चतुष्टयव्यवस्थितेषु चतुर्षु झल्लरीसंस्थितेषु पर्वतेषु अञ्जनशैलेषु नन्दीश्वरचक्रवालमध्यभागवर्त्तिषु दिक्चतुष्टयावस्थितेषु
चतुर्ष्वञ्जनवर्णेषु पर्वतेषु, दधिमुखेषु-अञ्जनकचतुष्टयपार्श्ववर्त्तिषु पुष्करिणीषोडशमध्यभागवर्त्तिषोडशश्वेतपर्वतेषु अवपाता येषु वैमानिका
देवा अवपतन्ति, अवपत्य मनुष्यक्षेत्रेष्वेवाऽऽगच्छंति उत्पाताश्च येभ्यो भवनपतय उत्पत्य मनुष्यक्षेत्रे समागच्छन्ति तिगिच्छकूटादय-
स्तेषु काञ्चनेषु-उत्तरकुरुमध्ये च देवकुरुमध्ये च प्रत्येकं पञ्चानां महाहृदानां प्रत्येकमुभयोः पार्श्वयोः दशसु दशसु सर्वाग्रेण द्विशतीपरि-
माणेषु काञ्चनमयपर्वतेषु,निषधाभिधानवर्षधरप्रत्यासन्नयोः शीतोदाभिधानमहानद्युभयतटवर्त्तिनोः चित्रविचित्रकूटाभिधानयोः पर्वतव-
रयोः, जमगत्ति नीलवद्वर्षधरप्रत्यासन्नयोः शीताभिधाननद्युभयतटवर्त्तिनोर्यमकयमकवराभिधानपर्वतयोः, शिखरेषु समुद्रमध्यवर्त्ति-
गोस्तूपादिपर्वतेषु कूटेषु च नन्दनवनकूटादिषु वस्तुं शीलं येषां ते वर्षधरादिवासिनो देवा न लभन्ते तृप्तिं इति योगः। तथा वक्षस्काराः
विजयविभागकारिणः अकर्म्मभूमयो हैमवतादिकभोगभूमयः तासु ये वर्त्तन्त इति गम्यं तेऽपि देवाः तेऽपि तृप्तिं न यान्ति इत्यर्थः,
तथा सुविभक्तविभक्तभूभागा देशा-जनपदा यासु कर्मभूमिषु कृष्यादि कर्मस्थानभूतासु भरतादिषु पञ्चदशपरिमाणासु येऽपि नराश्चतु-
रन्तचक्रवर्त्तिनो, वासुदेवाः, बलदेवाः प्रतीताः माण्डलिका महाराजा, ईश्वरा युवराजादयो, भोगिका इत्यमरः। तलवराः कृतपट्टबन्धाः

देवा मंडलीया इस्सरा तलवरा सेणावती इब्भा सेट्ठी रट्ठिया पुरोहिया कुमारा दंडणायगा गणनायगा माडंबिया सत्थवाहा कोडुंबिया अमच्चा एए अन्ने य एवमाती परिग्गहं संचिणंति, अणंतं, असरणं, दुरंतं, अधुवमणिच्चं, असासयं, पावकम्मनेम्मं, अवकिरियव्वं, विणासमूलं, वहबंधपरिकिलेसबहुलं, अणंतसंकिलेसकारणं,

ते तं धणकणगरयणनिचयं पिंडिता चेव लोभघत्था संसारं अतिवयंति सव्वदुक्खसंनिलयणं, परिग्गहस्स

---

राजस्थानीयाः, सेनापतयः–सेनानायका, इभ्या येषां द्रव्यस्योत्करेण हस्ती न दृश्यन्ते तावत्परिमाणद्रव्यपतयः, श्रेष्ठिनः श्री–देवतालंकृतशिरोवेष्टनकाः, राष्ट्रिका–राष्ट्रचिन्ताकारिणः राजचिन्ताकारिणः राजनियुक्ताः, पुरोहिताः शान्तिकर्मकारिणः, कुमाराः, राज्यार्हाः, दण्डनायकास्तंत्रपालाः, गणनायकाः सामान्यजनसमुदाये ये मुख्याः, माडम्बिकाः प्रत्यन्तराजानः, सार्थवाहाः अध्वनि सहायाः प्रतीताः, कौटुम्बिकाः ग्राममहत्तराः, सन्तो ये सेवकाः, अमात्यराजचिन्तकाः, एते उक्तलक्षणाः ये चाऽन्येऽपि एवमादयस्त-थाभूताः परिग्रहं संचिन्वन्ति–कुर्वन्ति सञ्चयं तत्। कीदृशं ? अपरिमाणत्वात् अनन्तं, इच्छा हु आगाससमा अणंतिया इति वचनात् दुःखेभ्यो रक्षणासमर्थत्वात् अशरणं, दुरन्तं पर्यवसानदारुणत्वात् दुरन्तं, अध्रुवं नावश्यंभावि आदित्योदयवत्, अनित्यं असारत्वात् अशाश्वतं ज्ञानावरणीयादिपापकर्मणां नेम्मं मूलधनं, जिनागमेन जिनबुद्धिचक्षुषा अवकिरियव्वंति तत्याज्यं क्षेप्यमित्यर्थः, विनाशो–ज्ञानादिगुणानां नाशकारणं, वधो–यष्ट्यादिना, बन्धो रज्ज्वादिना तेषां परिक्लेशस्तापस्तदेव प्रचुरं यत्र तत्, अपारं यत्संक्लेशः–चित्ताऽविशुद्धिस्तत् करणं ते परिग्रहः च पुनः धनकनकरत्न-निचयं पिण्डयन्तस्तदेकग्रहणं कुर्वन्तः लोभग्रस्ताः सन्तः संसारं–चतुर्गति-कलक्षणं अभिव्रजन्ति–गच्छन्ति। कीदृशं ? सर्वदुःखस्य निलयनं–स्थानं। परिग्रहस्यैव अर्थाय–प्रयोजनाय शिल्पानां आर्योपदेशप्रा-

य अट्ठाए सिप्पसयं सिक्खए बहुजणो कलाओ य बावत्तरिं सुनिपुणाओ लेहाइयाओ, सउणरुयावसाणाओ गणियप्पहाणाओ चउसट्ठिं च महिलागुणे रतिजणणे, सिप्पसेवं असिमसिकिसिवाणिज्जं, ववहारं अत्थसत्थ इसत्थच्छरुप्पगयं विविहाओ य जोगजुंजणाओ अन्नेसु एवमादिएसु बहूसु कारणसएसु जावज्जीवं नडिज्जए, संचिणंति मंदबुद्धी परिग्गहस्सेव य अट्ठाए करंति पाणाण वहकरणं, अलिय-नियडिसाइसंपओगे परदव्वे

प्यानां शतं कुंभकारादीनां कर्म शिक्षन्ते परिग्रहार्थमेव भूरिलोकः शिल्पं-आचर्योपदेशप्राप्यं कला आजीविकाहेतवो द्वासप्ततिमानास्तासु निपुणा-दक्षा लेखादिकाः गणितादिप्रधानाः शकुनरुतपर्यवसानाः शिक्षन्ते 'लेहं गणियं गीयं'इत्यादि गाथातो ज्ञेयाः, गणितं 'एकं दशं शतं सहस्रादिकाः' चतुःषष्टिर्महिलागुणा आलिङ्गनादि अष्टानां क्रियाविशेषाणां वात्स्यायनाऽभिहितानां प्रत्येकं अष्टभेदत्वात् चतुःषष्टिर्महिलागुणा भवन्ति इति चतुषष्टिः गीतनृत्यादयो वा भवन्ति तान्, किंभूतान् ? रतिजनान् शिल्पेन सेवावृत्त्यत्वेन राजादीनामवलगनं शिल्पसेवा तां, शिक्षिते इति। असिः-खड्गाभ्यासः मषिः-मषीकृत्यं अक्षरविज्ञानं कृषिः-क्षेत्रकर्षणं कर्म वाणिज्यं-वणिग् व्यापारः तथा व्यवहारो विवादछेदनं। अर्थोपायप्रतिपादनं अर्थशास्त्रं-राजनीत्यादि, इषुशास्त्रं-धनुर्वेदादि, त्सरुप्रगतं-क्षुरिकादिमुष्टिग्रहणोपायं, विविधाश्च योग-योजनान् बहु-प्रकारांश्च वशीकरणप्रयोगान् परीग्रहवशीकरणार्थं शिक्षन्ति। तथा उक्तात् अन्येभ्यः शिल्पादपरेभ्यस्तेषु एवमादिकेषु एवं प्रकारेषु बहुषु कारणशतेषु परिग्रहोपादानहेतुशतेषु अधिकरणभूतेषु वर्त्तमानास्सन्तः यावज्जीवं आजन्म पर्यन्तं नडिज्जएत्ति विभृज्यन्ते परिग्रहं दायादादिभिस्सह पृथक् क्रियन्ते। संचिन्वन्ति पुष्टतया नीयन्ते इति मन्दबुद्धयो-दुर्बुद्धियुक्ताः, पुनः परिग्रहस्यैव अर्थाय-प्रयोजनाय कुर्वन्ति प्राणानां-जीवानां वध करणं-हननक्रिया, अलीकं-मिथ्याभाषणं, निकृतिः-

अभिज्झा सपरदारअभिगमणसेवणाए आयासविसूरणं कलहभंडणवेराणि य अवमाणणविमाणणाओ इच्छाम-हिच्छप्पिवाससततितिसिया तण्हगेहि लोभघत्था अत्ताणा अणिग्गहिया करेंति कोहमाणलायालोभे, अकि-त्तणिज्जे परिग्गहे चेव होंति नियमा सल्ला दंडा य गारवा य कसाया सन्ना य कामगुणअण्हगा य इंदियले-

अत्यनादरकरणेन वञ्चनं,साऽतिसंप्रयोगो नाम निर्गुणद्रव्यस्य विशिष्टद्रव्यात्मसंमीलनेन गुणोत्कर्षभ्रमोत्पादनपरधनलोभं अत्र प्राकृतत्वात् प्रथमांतिमत्वमिति, परद्रव्य-ग्रहणेच्छा तथा सपरदार-स्वकीयपरदारसेवनार्थं आयासं शरीरमनोव्यायामं करोति इति एतावता धनव्ययभयात् विषयेच्छवोऽपि स्वपरस्त्रियमपि नो भजन्ते, कृपणो वित्तविनाशभयादपि स्वस्त्रियं न सेवते पुत्रः स्याद्यदि स पुनर्भोगभयात् धनविनाशः स्यात् इति वचनात्। विसूरणं परस्य वा मनःपीडाकारकं, कलहो वाचिकः, भण्डनं कायिकवैकल्पं वैरं चित्ते अमर्षानुबन्धः, अपमानं विनयभ्रंशः, विमाननाः कदर्थनाः कुर्वन्ति किंभूतास्सन्तः? इच्छा-अभिलाषमात्रं महेच्छा-महाभिलाषश्चक्रवर्त्यादीनामिव तदेव पिपासा-विषयपानेच्छा तया कृत्वा सततं-निरन्तरं तृपिता इव तृषिता ये ते तथा, पुनः कीदृशाः? तृष्णा द्रव्याप्तौ गृद्धिरप्राप्तार्थकांक्षा, लोभः-चित्तविमोहनं तैर्ग्रस्ता अभिव्याप्ता ये ते तथा, पुनः कीदृशाः? अत्राणाः-अशरणाः, आत्मना अनिगृहीतात्मन इत्यर्थः कुर्वन्ति क्रोधमानमायालोभानिति। पुनः कीदृशान्? अकीर्त्तनीयान् निन्दितान्, तथा परिग्रहे चैव भवन्ति नियमात्, निश्चयेनैव शल्यानि मायादीनि, दण्डाश्च दुःप्रणिहितमनोवाक्कायलक्षणाः गौरवाणि च-ऋद्धि-रस-सातागारवरूपाणि, कषायाः प्रतीताः, संज्ञा आहार १ मैथुन २ भय ३ परिग्रहाद्याः ४। कामगुणाः शब्दादयः, त एव अणण्हवा आश्रवद्वारादयः, इन्द्रियाणि असंवृतानि लेश्याश्च अप्रशस्ता भवन्ति, सयण-स्वजनसंप्रयोगाः स्वजनैः सह संप्रयुक्तत्वं वियोगत्वं वा कुर्वन्ति, सचित्ताचित्तमिश्रकानि द्रव्याणि अनन्तकानि

साओ सयणसंपओगा सचित्ताचित्तमीसगाइं दव्वाइं अणंतकाइं इच्छंति परिघेत्तुं सदेवमणुयासुरम्मि लोए लोभपरिग्गहो जिणवरेहिं भणिओ नत्थि एरिसो पासो पडिबंधो अत्थि सव्वजीवाणं सव्वलोए (सू० १९)

परलोगम्मि य नट्ठा तमं पविट्ठा महयामोहमोहियमती तिमिसंधकारे तसथावरसुहुमबादरेसु पज्जत्तमप-

सचित्तं-सजीवं अचित्तं-निर्जीवं धनादिमिश्रं उभयस्वरूपं सुतं सभूण-पुत्रादि इच्छन्ति परिघेत्तु गृहीतुं परिग्रहस्य अप्राप्तौ मनः खेदयन्ति इत्यर्थः। सदेवमनुजासुरेषु तथा सर्वत्र लोके स्थावरजङ्गमात्मके लोभपरिग्रहो भणित जिनवरैस्तीर्थकृद्भिः न तु धर्मार्थपरिग्रहो भणितः मुच्छावुत्तो परिग्गहो इति वचनात्, नास्ति इदृशः पाश इव पाशो-बन्धनं प्रतिबन्धनस्थानं अभिष्वङ्गाश्रयः परिग्रहादन्यः कश्चिदस्ति सर्वजीवानां सर्वलोके परिग्रह इति ज्ञेयं। अविरतिद्वारेण सूक्ष्माणामपि परिग्रहसद्भावात् यथा कुर्वन्ति इति द्वारं व्याख्यातं।

अथ यादृशं फलं परिग्रहो दत्ते तमाह-जन्मान्तरविषये परलोके चकारादिहलोके च नष्टाः सुगतिनाशात् सन्मार्गभ्रंशात् तमःप्रविष्टा अज्ञानमग्नाः, महामोहेन प्रकृष्टोदयचारित्रमोहनीयोदयेन मोहितमतयो-भ्रान्तबुद्धयः किंभूतेत्याह-

तमिस्रा-रजनी तद्वत् अज्ञानान्धकारो यः स तत्र केषु जीवस्थानकेषु नष्टा इत्याह-त्रस्यन्ति ते त्रसाः, आतपात् छायादि श्रयन्ते हेतुपदेशिकी संज्ञायुक्तास्त्रसाः त्रसनामकर्मोदयवर्त्तिनो द्वीन्द्रियादयः, तिष्ठन्तीति स्थावराः संज्ञारहिताः स्थावरनामकर्मोदयवर्त्तिनः एकेन्द्रियाः, सूक्ष्मनामकर्मोदयवर्त्तिनः सूक्ष्मा एकेन्द्रियाश्चर्मचक्षुषा अग्राह्याः, बादराः बादरनामकर्मोदयवर्त्तिन एकेन्द्रियाअपि बादराः त्रसा अपि बादरा अनेन प्रकारेण पर्याप्तनामकर्मोदयवर्त्तिनः १ अपर्याप्तनामकर्मोदयवर्त्तिनः २ एवं पर्याप्ताऽपर्याप्तकसाधारणप्रत्येक-

१ अत्र पर्याप्त कान्तारयित्यक्षराणि संस्कृतप्राकृत मिश्राणि प्रत्यन्तरे प्राकृतभाषा वद्धानि.

त्त्तग एवं जाव परियट्टंति दीहमद्धं जीवा लोभवससंनिविट्ठा। एसो सो परिग्गहस्स फलविवाओ इहलोइओ, परलोइओ, अप्पसुहो, बहुदुक्खो, महब्भओ, बहुरयप्पगाढो, दारुणो, कक्कसो, असाओ वाससहस्सेहिं मुच्चइ, न अवेतित्ता अत्थि हु मोक्खोत्ति, एवमाहंसु नायकुलनंदणो महप्पा जिणो उ वीरवरनामधेज्जो कहेसी य परिग्गहस्स फलविवागं। एसो सो परिग्गहो पंचमो उ नियमा नाणामणिकणगरयणमहरिह एवं जाव इमस्स मोक्खवरमोत्तिमग्गस्स फलिहभूयो चरिमं अधम्मदारं समत्तं॥ (सू० २०)

---

शरीरेषु अण्डज–पोतज–रसज–जरायुज–संस्वेदिम–उद्भिज उपपातिकेष्वपि–तिरिय–निरय–मणुस्सेसु जरामरणरोगबहुलेसु पलियोपम–सागरोवमाणि अणाइयं अणवदग्गं दीहमद्धं–चाउरंतसंसारकांतारमिति। अस्य व्याख्या चतुर्थाऽध्ययनादवसेया एवं फलभुजो भवन्ति इत्याह–जीवा लोभवससंनिविट्ठा परिग्रहे अभिनिविष्टा इत्यर्थः, एसो–सो इत्याद्यध्ययननिगमनव्याख्या चाऽस्य पूर्ववत् परिग्रहस्य एषः फलविपाकविशेषः इहलौकिकः, पारलौकिकः, परजन्मनि भवः, अल्पसुखः, बहुदुःखः, महाभयः, बहुरजसा संप्रगाढोयुक्तः, दारुणः, कर्कशः, असाताकारकः, वर्षसहस्रैरपि मुच्यते, नच निषेधे अवेदयित्वा मोक्षो नास्ति कर्मणां वेदनेनैव मोक्षः प्रदेशवेदनं तु नियमादेव भवति, एवमाख्यातवान् ज्ञातकुलनन्दनः महात्मा जिनः वीरवर्द्धमाननामधेयः कथितवान् परिग्रहस्य फलविपाकं एषः–स पूर्वोक्तस्वरूपः प्रत्यक्षेणैव दृश्यमानफलः परिग्रहः निश्चयादेव पञ्चम आश्रवद्वारः नानामणिकनकरत्नमहार्घ्यो–महामूल्यः परिग्रहः एवं यावत् इमस्सेत्ति प्रत्यक्षस्यैव कीदृशस्य मोक्षवरमुक्तिमार्गस्य फलिहभूतः–परिघोऽर्गलाभूतः चरिमं–पश्चिमं अधर्मद्वारं समाप्तं, गाथापञ्चकं निगमनाय आह—

एएहिं पंचहिं आसवेहिं रयमादिणि तु अणुसमयं। चउविहगइ दुह [जीव]पेरंत अणुपरियट्टंति संसारं ॥१॥
सव्वगई पक्खंदे काहंति अणंतए अकयपुण्णा। जे य न सुणंति धम्मं सोऊण य जे पमायंति ॥२॥
अणुसिट्ठंपि बहुविहं मिच्छदिट्ठीओ जे नरा। अहमा बद्धनिकाइयकम्मा सुणंति धम्मं न य करंति ॥३॥
किं सक्का काउं जे जं नेच्छइ ओसहं मुहा पाओ। जिणवयणं गुणमहुरं विरेयणं सव्वदुक्खाणं ॥४॥

एभिः पञ्चभिः आश्रवैः–प्राणातिपातादिभिः रज इव रजो जीवेन बध्यमानकर्मरजः रञ्जनात् कर्म ज्ञानावरणादि आत्मप्रदेशैः सह उपचित्य अनुसमयं–प्रतिक्षणं चतुर्विधाः चतुःप्रकारा देवादिभेदेन गतिर्गतिनामकर्मोदयात् संपाद्यो जीवपर्यायः पर्यन्तो विभागो यस्य तथा तं, अनुपरिवर्त्तन्ते संसारं–भवमिति, १। सर्वगतीनां देवादिसम्बन्धिनीनां प्रस्कन्दागमनानि करिष्यन्ति अनन्तान् अकृतपुण्याः अवहिताश्रवनिरोधलक्षणपवित्राऽनुष्ठानरहिताः ये च न शृण्वन्ति धर्म्मं–श्रुतरूपं धर्मं श्रुत्वा च ये प्रमाद्यन्ति–श्लथयन्ति संवरात्मकं नाऽनुतिष्ठन्तीत्यर्थः २। अनुशिष्टमपि गुरुणोपदिष्टमपि बहुविधं–बहुप्रकारं धर्म्ममिति सम्बन्धः पाठान्तरे तु अनुशिष्टा–अनुशासिता च बहुविधं यथा भवति तथा, मिथ्यादृष्टयो नरा अबुद्धयो–अधर्म्मिणः बद्धनिकाचितकर्म्माणः, तत्र बद्धं–प्रदेशेषु संश्लेपितं, निकाचितं–दृढतरबद्धमपवर्त्तनादिकरणानामविषयीकृतं इति भावः शृण्वंति केवलं अनुमत्यादिना धर्मं–श्रुतरूपं न च पुनः कुर्वन्तीति भावः ३। किंशक्यं कर्त्तुं? न शक्यं जे इति पादपूरणे यत्–यस्मात् नेच्छथ औषधं मुधा–प्रत्युपकारानपेक्षतया दीयमानमिति गम्यं, पातुमापातुं, किंरूपमौषधमित्याह–जिनवचनं गुणमधुरं विरेचनं–त्यागकारि सर्वदुःखानां ४। पञ्चैव प्राणातिपाताद्याश्रवद्वाराणि उज्झित्वा–त्यक्त्वा

पंचेवय ऊज्झिऊण पंचेवय रक्खिउण भावेण कम्मरयविप्पमुक्का सिद्धिवरमणुत्तरं जंति ॥५॥
इति आसवादारा सम्मत्ता

पञ्चैव प्राणातिपातविरमणादि संवरं रक्षित्वा पालयित्वा भावेन–अन्तःकरणवृत्त्या, कर्मरजो विप्रमुक्ता इति प्रतीतं, सिद्धानां मध्ये वराः सिद्धिवराः सकलकर्मक्षयलभ्या भावसिद्धिरिति अतएव अनुत्तरां–सर्वोत्तमां सिद्धिं यांति–गच्छन्ति ॥५॥

तत्समाप्तौ च सम्पूर्तिमानाः व्याख्यानतः आश्रवद्वाराः, तत्रास्य श्रुतस्कन्धस्य मरूपणा नोक्ता परमेकोधिकारः आश्रवद्वाररूपो व्याख्यातः, यदुक्तं नन्द्यध्ययने—

[1]से किं तं पण्हवागरणाइं पण्हावागरणेसु णं अट्ठुत्तरं पसिणसयं अट्ठुत्तरं अपसिणसय अट्ठुत्तरं पसिणापसिणसयं तं जहा–अंगुट्ठपसिणाइं, बाहुपसिणाइं अद्दागपसिणाइं अन्नेवि विचित्ता दव्वाइं विज्झाइसया नागसुवण्णेहिं सद्धिं दिव्वा संवाया आघविज्झंति, पण्हावागरणाणं परित्ता वायणा संखिज्जा अणुओगदारा संखेज्जा वेढा संखेज्जा सिलोगा, संखेज्जाओ निज्जुत्तीओ संखेज्जाओ संगहणीओ संखेज्जाओ पडिवत्तीओ, से णं अंगट्ठयाए दसमे अंगे सुयखंधे पणयालीसं उद्देसणकाला पणयालीसं समुद्देसकाला संखेज्जाइं पयसहस्साइं पयग्गेणं संखेज्जा अक्खरा अणंता गमा अणंता पज्जवा परित्ता तसा अणंता थावरा सासयगडनिबद्धनिकाइया जिणपन्नत्ता भावा आघविज्जंति पण्हविज्जंति परूविज्जंति दंसिज्जंति निदिसिज्जंति उवदंसिज्जंति से एवं आया से एवं नाया एवं विन्नाया एवं करचरणपरूवणा आघविज्जंति से तं पण्हावागरणाइं इत्यादि वक्तव्यताद्वारेण श्रुतस्कन्धस्यैकता ततस्तत्प्रतिपक्षभूतानां संवराणां द्वाराणां ।

१ पृष्ठ २३४ मुद्रित नन्दीसूत्रे.

इति श्रीसुधर्मस्वामि सुविहितपरम्परायातश्रीमज्जगचन्द्रसूरिपट्टालङ्कार-श्रीदेवेन्द्रसूरि-श्रीमत्तपागणविरुदधारकपट्टपरम्परायातभट्टारकश्रीआनंदविमलसूरिपट्टोदयशैलचूलालङ्कार-भट्टारकश्रीविजयदानसूरिपट्टभूषणश्रीहीरविजयसूरिपट्टस्थ-सवाईश्रीविजयसेनसूरिपट्टसुवर्णाचलचूलायमानश्रीविजयदेवसूरिशिष्य-श्रीविजयसिंहसूरिपट्टनंदनवनपारिजातायमानभट्टारकश्रीविजयप्रभसूरिपादपद्मोपासनप्राप्तोपसंपद्भिस्तथा श्रीमत्तपागणगगनांगणदिनमणिभट्टारक-भट्टारकश्रीमदानंदविमलसूरीश्वरमूख्यशिष्य-श्रीमद्धर्मसिंहगणिशिष्यश्रीजयविमलगणि-विनेयश्रीकीर्त्तिविमलगणिपादपद्मोपसेवि-श्रीविनयविमलगणिपट्टालङ्कृति-समानश्री धीरविमलगणि-विनयिशिष्यैः संविज्ञपयश्रीनयविमलगणिभिरपरनामश्रीज्ञानविमलसूरिभिर्विरचितायां प्रश्नव्याकरणसूत्रवृत्तौ

इति प्रश्नव्याकरणे पञ्चमाध्ययन विवरणं समाप्तं, तत्समाप्तौ चाश्रवाध्ययनानां विवरणं समाप्तम् ।।

इति श्रीसूरिपुरन्दरज्ञानविमलसूरिविरचित

## प्रश्नव्याकरणाश्रवाध्ययनानां विवरणं समाप्तम् ।